# प्रकाशकीय

अपने उद्देश्यों की पूर्ति में 'प्रमाणकारिकाः' का प्रस्तुत संस्करण विद्वत्समाज को समर्पित करते हुए हम अन्तर्द्वन्द्व से ग्रस्त हैं। एक ओर परिषद् की प्रकाशनमाला में एक और पुष्प पिरोते हुए हमें हर्ष का अनुभव हो रहा है तो दूसरी ओर इस बात का अत्यन्त खेद भी है कि जिस उपवन में यह पुष्प विकसित हुआ था उसका मालाकार अपने पुष्प को एक माला की लड़ी में पिरोये गये रूप में देखने के लिए हमारे बीच नहीं है।

'प्रमाणकारिकाः' के रचयिता डॉ० हर्षनारायण के नाम के पूर्व स्वर्गीय लिखते हुए मुझे अत्यन्त दुःख का अनुभव हो रहा है, किन्तु विधि के विधान में वश ही क्या है !

जिस विस्तार के साथ ग्रन्थ का प्रारम्भ किया गया है उससे तो यही प्रतीत होता है कि विद्वान् लेखक के मन में इसकी महती कल्पना रही होगी, किन्तु न तो ग्रन्थ में पुरोवाक् ही है और न लेखक की भूमिका। अतः अब तो जितना ग्रन्थ प्रकाशित हो रहा है उसी से उसके आकार-प्रकार और विस्तार का अनुमान लगा कर सन्तोष किया जा सकता है।

डॉ० हर्षनारायण जी की इस अन्तिम रचना को प्रकाशित करके उन्हीं की स्मृति में समर्पित किया जा रहा है। हमारे विश्वास के अनुसार आत्मा अजर और अमर है। अतः विद्वान् लेखक की आत्मा जैसे भी जहाँ भी होगी इस कृति को प्रस्तुत रूप में देखकर सन्तुष्ट अवश्य होगी।

**जगदम्बा प्रसाद सिनहा**
मन्त्री

# विषयानुक्रमः

# प्रमाण-कारिका:

## I

## पस्पशाः कारिकाः

स्यात् पुरुषार्थ-मीमांसा मीमांसानां गरीयसी ।
सा मान-मेय-मीमांसां विना नैव प्रसिध्यति । ॥१॥

तत्र प्रमाण-मीमांसा-कृते विप्रतिपत्तयः
सङ्ख्यायां, लक्षणे चापि, गोचरे च, फले क्रमात् । ॥२॥

विप्रतिपत्तयो बह्व्यो मानसङ्ख्या-नियामिकाः
अशेषतोऽत्र सन्दृभ्या मान-मेय-विचारणे । ॥३॥

मानभङ्ग-प्रसङ्गोऽपि प्राप्यते दर्शने क्वचित्
प्रमाणशून्यतावादश्रयः, सोऽप्यत्र लक्ष्यते । ॥४॥

प्रमाण-लक्षणं पूर्वं, प्रमाणानां च लक्षणम्
इत्यपि व्यवसेयोऽत्र, यथा दृष्टं यथा श्रुतम् । ॥५॥

—o—

# II

## ज्ञातृ-कारिकाः

बौद्धं, लोकायतं मुक्त्वा, ऽऽजीविकांश् चापवादत
दर्शनानि प्रवर्तन्ते पुरस्कृत्यात्मदर्शनम् । ॥१॥

निर्वाणवाद-संशुद्धो बौद्ध-नैरात्म्यदर्शनम्
परात्मदर्शनात्मैव शाश्वतोच्छेदवर्जितम् । ॥२॥

'नेतं मम' च 'नेसोहमस्मि' 'अत्ता न सो च मे'—
इति बुद्धोक्तिषु स्पष्टं प्रच्छन्नं चात्मदर्शनम् ।[१] ॥३॥

आत्मतत्त्वं परिच्छेत्तुं निर्णेतुं ज्ञातृताऽस्य च
दर्शनेषु विचित्रेषु विचारोऽत्र प्रवर्तते । ॥४॥

कास्वप्युपनिषत्स्वात्मा ज्योतिषां ज्योतिरीरितः ।[२]
स्वभासा भात्यसौ, सर्वं त्वनुभाति विभाति च ।[३] ॥५॥

पुरुषोऽयं स्वयंज्योतिः[४] प्रज्ञानघन एव च ।[५]
आत्मा ज्ञो नित्यचैतन्योऽयं वेदान्ते प्रतिष्ठितः ।[६] ॥६॥

यद्यात्मा नित्यचैतन्यो,ऽचैतन्यं न भवेदिह ।
किन्तु स्वापे च मूर्च्छादौ चैतन्यं कुत्र विद्यते ?
दृष्टेर् विपरिलोपस् तु नित्यद्रष्टुर् न विद्यते ।[७]
मूर्च्छादौ किन्तु तद्वृत्तिः कथञ्चित् केन साध्यते ? ॥७-८॥

शङ्करस्योत्तरं ध्येयमचैतन्यं न विद्यते
सुप्तानां च ग्रहाविष्टानां मूर्च्छाग्रस्तचेतसाम् ।
आभाति विषयाभावात् तत्राचेतयमानता,
चैतन्याभावतो नैव, चैतन्यं नैव लुप्यते ।[८] ॥९-१०॥

परमात्मा च जीवात्मा—ऽऽत्माऽसौ रूपद्वये स्थितः ।
परमात्मा परब्रह्मापरब्रह्मोभयात्मकः ।[९] ॥११॥

जीवभावमनुप्राप्तः स जीवात्मा प्रकीर्तितः ।
ब्रह्माण्डे प्रत्यगात्माऽसौ, पिण्डे जीवात्म-नामभाक् । ॥१२॥

साक्षिचैतन्यमात्रोऽसौ, न ज्ञाता प्रत्यगात्मनः ।
'विज्ञातारमरे ! केन विजानीयाद्' इति श्रुतिः ।[१०] ॥१३॥

अहमर्थतयाऽध्यक्षो मनसा ऽप्याह शङ्करः ।
योगिप्रत्यक्षगम्योऽपि शुद्धात्मा, न शरीरधृक् । ॥१३ क॥

नात्यन्ताविषयश् चात्मा ऽस्मद्बोध-विषयो हि सः ।[११]
शङ्करोक्तमिदं वाचस्पतिर् व्याख्यातुमिच्छति—
जीवोऽस्मत्प्रत्ययाद् वेद्यः, प्रत्यगात्मा कुतोऽपि न ।[१२]
अपरोक्षत्वतः सिद्धः प्रत्यगात्मेति शङ्करः ।[१३] ॥१४-१५॥

प्रपञ्चातीतमात्मानं प्रायः पश्यन्ति योगिनः
संराधनपथारूढा इत्यपि प्राह शङ्करः ।[१४] ॥१६॥

भक्तिध्यानाद्यनुष्ठानं संराधनमिहोच्यते ।[१५]
स संराधक-संराध्य-भाव औपाधिकस् त्विह ।[१६] ॥१७॥

'परांचि खानि व्यतृणत् स्वयम्भूस्, तस्मात् पराङ पश्यति नान्तरात्मन् ।
'कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ।'[१७] ॥१८॥

बाध्व-बाष्कलि-संवादे शङ्करोदाहृते ननु
उपशान्तोऽयमात्मेति तूष्णींभावस्य चोदकः ।[१८] ॥१९॥

आत्मा स्वयम्प्रकाशोऽस्ति ब्रह्मप्रख्यः स्वभावतः ।
प्रकाशो धर्मभूतोऽस्य रामानुज-मतेन तु ।[१९] ॥२०॥

विशेषोऽयमपीहैष यत् प्रकाशो न निश्चलः ।
तत्सङ्कोचविकासौ च कर्मणा पारमार्थिकौ ।[२०] ॥२१॥

ज्ञप्तिमात्रो भवेदात्मा शाङ्करेऽद्वैतदर्शने ।
ज्ञाताऽऽत्मा ज्ञानमात्रो न विशिष्टाद्वैतदर्शने । ॥२२॥

'सर्वं खल्विदं ब्रह्म,'[२१] तदन्यन् नैव विद्यते ।
'अहं ब्रह्मास्मि'[२२] सुष्ठूक्तं, 'नेह नानाऽस्ति किञ्चन ।'[२३] ॥२४॥

'अंशो नानाव्यपदेशाद्' वेदान्ते जीव उच्यते।[२४]
उपनिषत्सु गीतायां च यथोक्तं तथा शृणु—
'ममैवांशो जीवलोके जीवभूतः सनातनः।'
'मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति।'[२५]
'यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः'
'तथाऽक्षराद् द्विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापि यन्ति।'[२६]
॥२५-२६॥

क्वचित् क्वचिच् च दृश्यन्ते स्मृतयः श्रुतिवन् ननु
जीवप्रभववादिन्यो, याज्ञवल्क्यस्मृतिर्, यथा—
'निस्सरन्ति यथा लोहपिण्डात् तप्तात् स्फुलिङ्गकाः,
'सकाशादात्मनस् तद्वदात्मानः प्रभवन्ति हि।'[२७] ॥२७-२८॥

पञ्चरात्रमते जीवः सृष्ट इत्याह शङ्करः।[२८]
रामानुजादिभिः किन्तु प्रत्युक्तो ऽसौ प्रसह्य वै। ॥२६॥

'एकं ब्रह्मैव नित्यं, तदितरदखिलं तत्र जन्मादिभागि—
'त्याम्नातं तेन जीवोऽप्यचिदिव जनिमानित्यनध्येतृचोद्यम्।
'तन्नित्यत्वं हि साङ्गश्रुतिशतपठितं, सृष्टिवादः पुनः स्याद्
'देहादिद्वारतोऽस्येत्यवहितमनसामाविरस्त्यैकरस्यम्।'
इति वेङ्कटनाथार्यस् तत्त्वमुक्ताकलाप-कृत्।[२९]
तद्व्याख्यायां च **सर्वार्थसिद्धि**-नाम्न्यां भणत्यसौ—
ब्रह्मदत्तादिभिस् तूक्ते जीवानां सृष्टि-संहृती।[३०]
स्युर् यादवप्रकाशोऽपि[३१], भर्तृप्रपञ्च-भास्करौ[३२],
आश्मरथ्यादयोऽप्येवं जीवानां सृष्टिवादिनः।[३३]
जीवसृष्टिकथा पञ्चरात्रे लभ्येतरत्र च। ॥३०-३४॥

**महाभारत** एवापि जीवोत्पत्तिकथा स्फुटा।
कथोदाह्रियते साऽधो विचारार्थं विचक्षणैः—
'यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः
'ज्ञेयः स एव राजेन्द्र! जीवः सङ्कर्षणः प्रभुः।
'सङ्कर्षणाच् च प्रद्युम्नो मनोभूतः स उच्यते।
'प्रद्युम्नाद् योऽनिरुद्धस् तु सोऽहङ्कारः स ईश्वरः।'[३४]

'सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना
'कृष्ण ! त्वमात्मनाऽस्राक्षी प्रद्युम्नं चात्मसम्भवम् ।
'प्रद्युम्नादनिरुद्धं त्वं यं विदुर् विष्णुमव्ययम् ।
'अनिरुद्धोऽसृजन् मां वै ब्रह्माणं लोकधारिणम् ।'[35]
'अस्मिन् मूर्तिश् चतुर्थी या सा सृजेच् छेषमव्ययम्
'स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ।
'प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ।
'अनिरुद्धात् तथा ब्रह्मा तन्नाभिकमलोद्भवः ।'[36] ॥३५-४१॥

ब्रह्मणो जायते जीवो, याति सज्ज्ञानतो लयः—
इत्यद्वैतवेदान्ते **योगवासिष्ठकृन्मतम्—**
'अनादेश् चेतनाधातोरिष्टोऽस्तु परनिर्मितिः ।'[37]
'सर्वा एताः समायान्ति ब्रह्मणो भूतजातयः ।'[38]
'सर्वा एवोत्थिता राम ! ब्रह्मणो जीवराशयः ।'[39]
किञ्चित् प्रचलिता भोगाद् पयोराशेरिवोर्मयः ।
'सर्वा एव विनिष्क्रान्ता ब्रह्मणो जीवराशयः ।'[40]
स्वतेजः स्पन्दिताभोगाद् दीपादिव मरीचयः ।
'सर्वा एव समुत्पन्ना ब्रह्मणो भूतपङ्क्तयः ।'[41]
'निर्झरादमलोद्योत्तात् पयसामिव बिन्दवः ।'[42]
'शीतरश्मेरिव ज्योत्स्ना स्वालोक इव तेजसः ।'[43]
'यथा सम्पद्यते ब्रह्मा कीटः सम्पद्यते तथा ।'[44]
'आब्रह्मकीटसंवित्तेः सम्यक् संवेदनात् क्षयः ।'[45]
'अकारणमपायान्ति सर्वे जीवाः परात् पदात् ।'[46]
'पश्चात् तेषां स्वकर्माणि कारणं सुख-दुःखयोः ।'[47]
**योगवासिष्ठ-वाक्यानि** ध्येयान्येतानि पण्डितैः । ॥४२-४९॥

अन्यथा सर्वशास्त्रेषूपनिषद्गीतयोस् तथा,[48]
'नित्यः, सर्वगतः, स्थाणुरचलो, ऽयं सनातनः ।'
'न जायते, म्रियते वा विपश्चिन्, नायं कुतश्चिन्, न बभूव कश्चित् ।
'अजो, नित्यः, शाश्वतो, ऽयं पुराणो, न हन्यते हन्यमाने शरीरे ।'[49]
॥५०-५१॥

पूर्णता निवसेत् जीवेऽव्यक्ता व्यक्तिमपेक्षते।
सर्वसम्भावनागारो सर्वं भवितुमर्हति। ॥५२॥

'कर्मणेन्द्रो भवेज् जीवो, ब्रह्मपुत्रः स्वकर्मणा,[५०]
'सुरत्वं च मनुत्वं च, राजेन्द्रत्वं लभेन् नरः।
'स्वकर्मणा शिवत्वं च, गणेशत्वं तथैव च।'[५१]
परब्रह्मत्वमेवापि, का कथाऽन्यगतेः पुनः? ॥५३-५४॥

ब्रह्मविद् भवति ब्रह्मैवेत्युपनिषद्घोषणा।[५२]
ब्रह्मज्ञानात् परां ब्राह्मीं स्थितिं नार्थान्तरं विदुः। ॥५५॥

'भिद्यते हृदयग्रन्थिश्, छिद्यन्ते सर्वसंशयाः,
'क्षीयन्ते चास्य कर्माणि, तस्मिन् दृष्टे परावरे।'[५३] ॥५६॥

पुरुषः साङ्ख्य-योगानां वेदान्तानामिवागुणः,
केवलश्, चितिमात्रश् च, स्वरूपेऽवस्थितो यदा। ॥५७॥

चितिमात्रस्वरूपो यः केवलः पुरुषः स्मृतः[५४]
पुरुष-प्रत्ययं पश्येत्, प्रत्ययः पुरुषं न हि। ॥५८॥

चिदात्मा पुरुषः शुद्धोऽचिदात्मा प्रत्ययः जडः—
इति व्यासस्, तथा वाचस्पतिर्, भोजादयोऽपि च।[५५] ॥५९॥

किन्तु विज्ञानभिक्षुस् तद्विरुद्धं भाषते क्वचित्—
चितिमात्रः पुमान् विम्बः शुद्धः केवल एव हि। ॥६०॥

वुद्ध्यारूढं च स्वाकारमात्मानं पश्यतीति ह
केवलः प्रतिविम्बाख्यं—प्रोक्तं विज्ञानभिक्षुणा।[५६] ॥६१॥

तथाऽपि प्रतिविम्बाख्यः पुरुषप्रत्ययः किल
ज्ञाता स्यात्, केवलो ज्ञेय इत्यपीच्छति स स्वयम्।[५७] ॥६२॥

लिङ्गानुवचनात् सूत्रे,[५८] क्वचिद् वात्स्यायनेऽपि च,[५९]
आत्माऽनुमानगम्यः स्याल् लिङ्गैरिच्छादिभिर् ननु ॥६३॥

आत्माऽध्यक्षोऽपि संयोगविशेषान् मनआत्मनोः
योगसमाध्यवस्थायामिति वात्स्यायनः पुनः।[६०] ॥६४॥

उद्द्योतकर आहात्मा चाहम्प्रत्ययगोचरः ।
प्रत्यक्षो मानसोऽत्तोऽसौ,[६१] तट्टीकाकृन्मतेऽपि च ।[६२] ॥६५॥

आत्माऽस्ति प्रतिपत्तव्योऽनुमानान्, नाक्षतः क्वचित् ।
अस्मदर्थः शरीरं स्याज्—जयन्तो न्यायवित्तमः ।[६३] ॥६६॥

तदा प्रभृति रूढोऽयं राद्धान्तो न्यायदर्शने—
प्रत्यक्षान् मानसाद् ग्राह्यः आत्माऽस्मत्प्रत्ययात्मकात् । ॥६७॥

अप्रत्यक्षो भवेदात्मेति **वैशेषिकसूत्र-कृत्** ।[६४]
योगेऽध्यक्षश् च संयोगविशेषान् मनआत्मनोः ।[६५] ॥६८॥

अहमर्थत्वतोऽध्यक्षो मनसाऽप्याह शङ्करः ।[६६]
योगिप्रत्यक्षगम्यस् तु शुद्धात्मा, न शरीरधृक् ।[६७] ॥६९॥

विश्वनाथमतेनात्मा ऽध्यक्षो नेच्छादिभिर् विना—
'धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ।'[६८] ॥७०॥

प्रत्यक्षो मनसा ऽऽत्मा, ऽत्र कश्चिद् विप्रतिपद्यते ।
विप्रतिपद्दशायां तु 'बुद्ध्यादिगुणलिङ्गकः ।'[६९] ॥७१॥

'प्रत्यक्षविषयेऽप्येताश् चित्रं, विप्रतिपत्तयः ।
'परोक्षार्थे हि विमतिः प्रत्यक्षेणोपशाम्यति ।
'प्रत्यक्षे हि समुत्पन्ना विमतिः केन शाम्यति ?'[७०]
इत्यपि ध्येयमेवात्र ज्ञातृतत्त्वविमर्शिभिः । ॥७२-७३॥

न्याय-वैशेषिके चात्मा ज्ञानाधिकरणं मतः,
न तु ज्ञानस्वरूपो, निर्गुणो मोक्षे जडः स्मृतः । ॥७४॥

'स चेतनश् चिता योगात्, तद्योगेन विना जडः ।
'नार्थावभासादन्यद् धि चैतन्यं नाम मन्महे ।'[७१] ॥७५॥

स्याच् चैतन्यस्वभावात्मा ऽऽत्माऽहम्प्रत्ययलक्षितः ।[७२]
'ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् ।'[७३] ॥७६॥

प्रायशस् तु स्वयंज्योतिरात्मा मीमांसकैर् मतः ।[७४]
'आत्मनैव प्रकाशो ऽयमात्मा ज्योतिरितीरितम् ।'[७५] ॥७७॥

ज्ञानशक्तिस्, तथा सत्ता, द्रव्यत्वादिकमात्मनः
नैजं रूपं भवेद् भाट्टे, तन् मोक्षे नावहीयते ।[७६] ॥७८॥

तत्सिद्धान्ते भवेदात्मा प्रत्यक्षो मनसैव च ।[७७]
क्रियाविरोधतः स्वात्मन्यज्ञेयोऽसौ च तन्मते ।[७८] ॥७९॥

चेतनत्वेन स ज्ञाता द्रव्यत्वेनार्थवन् ननु—
इति सुदर्शनाचार्यः पार्थसारथि-वृत्तिकृत् ।[७९] ॥८०॥

'सुखदुःखाद्यवस्थाश् च गच्छन् नपि नरो मम
'चैतन्य-द्रव्य-सत्तादि-रूपं नैव विमुञ्चति ।'[८०] ॥८१॥

आत्मनस् तु निजैव स्याच् चितिशक्तिश् च शाश्वती
विषयानुपरक्तात्मगोचरैवावतिष्ठते ।[८१] ॥८२॥

'निजं यत् त्वात्मचैतन्यमानन्दोऽध्यक्ष्यते च यः
'यच् च नित्य-विभुत्वादि तेनात्मा नैव मोक्ष्यते ।'[८२] ॥८३॥

तदानीं मनसो भावान् नित्य एवाऽऽत्मवन् मनः—
इति सुचरितः प्राह काशिकायां महामतिः ।[८३] ॥८४॥

अप्रकाशस्वभावानि मातृ-मेयानि सर्वथा ।
जाग्रतो हि प्रकाशन्ते, न सुपुप्तौ कदाचन । ॥८५॥

मित्यायत्तप्रकाशानि सर्वे त इति सिध्यति ।
मितिः स्वयम्प्रकाशा स्यान्, न त्वात्मा विपयाणि च ।[८४] ॥८६॥

प्राभाकर-मते त्वात्मा प्रमातृत्वेन गृह्यते ।
क्रियाविरोधतः स्वात्मन्यात्मा मेयत्व-भाङ् न हि ।[८५] ॥८७॥

सुपुप्तस्य प्रकाशन्ते माता मेयानि न क्वचित् ।
अतः स्वरूपतो ज्ञेयमप्रकाशात्मकं द्वयम् ।[८६] ॥८८॥

'जानाति-धातूपादानः क्रिया-भेदो' ऽस्ति चात्मनि ।[८७]
तथाऽपि नास्त्यनित्यत्वं त्वात्मनो भाट्ट-दर्शने ।[८८] ॥८९॥

'विक्रिया ज्ञानरूपाऽस्य न नित्यत्वे विरोत्स्यते ।'[८८]
विक्रियायाः क्रियाया वाऽऽत्मनो विवृतिरीक्ष्यताम्—

'यजमानत्वमप्यात्मा सक्रियत्वात् प्रपद्यते।
'न परिस्पन्द एवैकः क्रिया नः कणभोजिवत्।' ॥
'न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया।
'न च धात्वर्थमात्रं स्यादन्याधारेऽपि कर्तृता।' ॥
'सत्ता-ज्ञानादि-रूपाणां कर्ता तावत् स्वयं पुमान्।
'योऽपि भूतपरिस्पन्दस् तत्राधिष्ठानतो भवेत्।'[८९] ॥९०-९३॥

सम्बन्धनं क्रिया-कर्म-सम्बन्धश् च—कुमारिलः—
'न क्रिया-कर्म-सम्बन्धाद् ऋते सम्बन्धनं क्वचित्।'[९०] ॥९४॥

आत्मानमधिकृत्योक्तं यत्किञ्चिच् छबरादिभिः
तत् तु चञ्चुप्रवेशात्मं वेदान्तः पूरयिष्यति। ॥९५॥

'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तिता भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस् तु बोधः प्रयाति वेदान्त-निषेवणेन।'[९१] ॥९६॥

ईश्वरस् त्वन्यधर्माणां सामीयानां विशेषतः
तत्त्वतश् चात्मभिन्न स्यान्, निःश्रेयसमपीति ह ॥९७॥

दर्शनस्य परा काष्ठा वेदान्तो भारते महान्।
प्रायोऽनुषङ्गमात्राणि दर्शनानीतराणि तु। ॥९८॥

तात्पर्यमस्ति वेदान्तेऽन्ततः सर्वातिशायिनि
शिष्टैः परिगृहीतानां दर्शनानामिहोत्तमैः। ॥९९॥

आत्म-केन्द्रक एवासावात्मा ब्रह्मैव नापरः।
सर्वे धर्मा विदेशीया प्राय ईश्वर-केन्द्रकाः। ॥१००॥

इदमत्र विशेषो यन् नवप्लातोन-दर्शनम्,
तसव्वुफ़ेति वेदान्त-सङ्काशो मुस्लिमागमः,
रहस्यसम्प्रदायाश् च केचित् ख्रीष्टीय-मूलिकाः
सर्वं खल्विदं ब्रह्मेतिवद् वादं वदन्ति ह। ॥१०१-१२॥

ब्रह्मांशो वा, तदाभासो, तत्प्रतिबिम्ब एव वा—
आत्मानमधिकृत्यैवं तेषां विप्रतिपत्तयः। ॥१०३॥

## टिप्पणयः

१. 'यं दुक्खं तदनत्ता, यदनत्ता तं ''नेतं मम, नेसोहमस्मि, न मे सो अत्ता'' ति एवमेतं यथाभूतं सम्मप्पञ्ञाय दट्ठब्बं ।' सं.नि. III २२.४५

२. 'तच् छुभ्रं ज्योतिषां ज्योतिस् तद् यदात्मविदो विदुः ।' मुं.उ. २.२.६

३. 'न तत्र सूर्यो भाति, न चन्द्र-तारकं, नेमा विद्युतो, कुतोऽयमग्निः ? 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।' ॥ तत्रैव २.२.१०; कठ.उ. २.२.१५

४. 'अत्रायं पुरुषः स्वयंज्योतिर् भवति ।' बृ.उ. ४.३.६

५. 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ।' तत्रैव ४.५.१३

६. ब्र.सू. २.३.१८, शारी.भा. युतम्

७. 'न हि द्रष्टुर् दृष्टेर् विपरिलोपो विद्यते, ऽविनाशित्वात्‥।' बृ.उ. ४.३.२३

८. शारी.भा. २.३.१८

९. 'एतद् वै, सत्यकाम ! परं चापरं च ब्रह्म यदोङ्कारः ।' प्र.उ. ५.२

१०. बृ.उ. २.४.१४

११. 'न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्‥।' शारी.भा. १.१.१

१२. भामती १.१.१

१३. 'अपरोक्षत्वाच् च प्रत्यगात्मप्रसिद्धेः ।' शा.भा. १.१.१

१४. 'अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः ।' शारी.भा. ३.२.२४

१५. 'संराधनं च भक्ति-ध्यान-प्राणिधानाद्यनुष्ठानम् ।' तत्रैव

१६. तत्रैव ३.२.२४–२५

१७. कठ.उ. ४.१

१८. शारी.भा. ३.२.१७

१९. श्रीभा. १.१.१; वेदार्थसङ्ग्रहः, पृ० ११

२०. तत्र तत्रैव

२१. छां.उ. ३.१४.१

२२. बृ.उ. १.४.१०

२३. तत्रैव ४.४.१६; कठ.उ. ४.११

२४. ब्र.सू. २.३.४३

२५. गी. १५.७

२६. मुं.उ. २.१.१

२७. या.स्मृ., प्रायश्चित्ताध्यायः ६७

२८. शारी.भा. २.२.४२–४५

२९. तत्त्वमुक्ताकलापः २.१६

३०. सर्वार्थसिद्धिः २.१६

३१. नृसिंहदेवः, सर्वार्थसिद्ध्यानन्ददामिनीटीका २.१६

३२. अभिनवरङ्गनाथ-परकालयतिः, सर्वार्थसिद्धि-भावप्रकाशटीका (मैसूरु), पृ० ४०५

३३. शारी.भा. १.४.२२

३४. महाभारतम्, शान्ति. ३३९.४०–४१

३५. तत्रैव, भीष्म. ६५.७०–७१

३६. तत्रैव, शान्ति. ३३९.७२–७४

३७. योगवासिष्ठः १.११

३८. तत्रैव ३.९४.१६

३९. तत्रैव ३.९४.२५

४०. तत्रैव २०

४१. तत्रैव २१

४२. तत्रैव २६

४३. तत्रैव ३०

४४. तत्रैव ३.६७.६९

४५. तत्रैव ६८

४६. तत्रैव ६/१.१२४.४

४७. तत्रैव ५

४८. गी. ३.२७

४९. कठ.उ. १.२.१८

५०. देवीभागवतम् ९.२७.१८

५१. तत्रैव २०

५२. मुण्डकोपनिषद् ३.२.६

५३. तत्रैव २.२.८

५४. योगभाष्यम् ३.३५

५५. तत्रैव, तत्त्ववैशारदी-भोजवृत्त्यादि-युतम्

५६. योगवार्तिकम् ३.३५

५७. तत्रैव

५८. न्या.सू. १.१.१० ('इच्छा-द्वेष-प्रयत्न-सुख-दुःख-ज्ञानान्यात्मनो लिङ्ग-मिति')

५९. 'तत्रात्मा तावत् प्रत्यक्षतो न गृह्यते। अनुमानाच् च प्रतिपत्तव्य इति।' न्या.भा. १.१.१०

६०. 'युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति।' न्या.भा. १.१.३

६१. 'प्रत्यक्षेण तावदात्मा उपलभ्यते। कथम्? लिङ्गलिङ्गिसम्बन्धस्मृत्यनपेक्षं विषयस्वभावभेदानुविधाय्यहमिति विज्ञानं रूपादिविज्ञानवत् प्रत्यक्षम्।... अथ मन्यसे अस्त्यहम्प्रत्ययो न पुनस्यात्मा विषयः, हन्त! तर्हि निर्दिश्यतां विषयः। ...रूपादयः तावदहङ्कारस्य विषया न भवन्ति।...न हि भवति कदाचिदहं रूपमहं वेदनादय इति।' न्या.वा. ३.११, पृ० ३४१; 'तदेवमहंप्रत्ययविषयत्वादात्मा तावत् प्रत्यक्षः।' तत्रैव, पृ० ३४२

६२. न्या.वा.ता. ३.१.१; न्या.वा.ता.परि. १.१.१०

६३. 'आत्मा प्रत्यक्षतो नावधार्यते, अस्मदादीनामहंप्रत्ययस्य शरीरावलम्बनात्; अनुमानात् तु प्रतिपत्तव्यः।' न्यायकलिका, पृ० ५

६४. 'तत्रात्मा मनश् चाप्रत्यक्षे।' वै.सू. (पुणे) ८.१.२

६५. 'आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्।' वै.सू. ९.१३

६६. **वै.सू.उ.** ३.२.१४; ६.११

६७. तत्रैव

६८. **न्या.सि मु** ४६

६९. **त.भा.**, पृ० १४५

७०. **न्या मं**, प्रमाण-प्र., पृ. ६१

७१. तत्रैव, प्रमेय-प्र., पृ० ६

७२. 'अहम्प्रत्ययेन हि चैतन्यस्वभावस्यात्मनोऽस्तित्वमात्रमवगम्यते।' तन्त्रवार्तिकम् २.१.५, द्वि.सं., पृ० ३७३

७३. **मी.श्लो.वा** १.१.५; आत्मवाद: ७३

७४. 'स्वसंवेद्य: स [आत्मा] भवति, नासावन्येन शक्यते द्रष्टुम्।' **मी.भा.** (बृहती सं), पृ० २४१; 'सोऽपि अन्य: पुरुष: स्वयमात्मानमुपलभते, न परात्मानम्।...अथास्मिन् नर्थे ब्राह्मणं भवति -"शान्ताया वाचि किम्? ज्योतिरेवायम्पुरुष आत्मज्योति: सम्राडिति होवाच"- इति। परेण नोपलभते इत्यत्रापि ब्राह्मणम् -"अगृह्यो न हि गृह्यते"—इति। "परेण न गृह्यते" इत्येतदभिप्रायमेतत्। (पृ० २४४–२४५) कुत: ? स्वयंज्योतिष्ट्ववचनात्। अथापि ब्राह्मणं भवति— "अत्रायं पुरुष: स्वयंज्योतिर् भवति"— इति। केन पुनरुपायेनायमन्यस्मै कथ्यत इति ? तत्राप्युपाये ब्राह्मणं भवति—"स एष नेतिनेत्यात्मेति होवाच"—इति। "असौ एवंरूप:" इति न शक्यते निदर्शयितुम्, यत् पर: पश्यति तत्प्रतिषेधस् तस्योपदेशोपाय:।" (२४६–२४७); 'स्वसंवेद्य: स भवति इति वदता एक एवात्मा अहम्प्रत्ययेन कर्तृकर्मरूपतया आलम्ब्यत इत्यभ्युपगतं भवति।' **ऋजुविमलापञ्जिका**, पृ० २४१; '...न गौणया वृत्त्या स्वयंज्योतिष्ट्वं व्याख्यातुं शक्यते।' (तत्रैव, पृ० २४५); 'एवं च स्वयंज्योतिष्टवमुपपद्यत इति।' **बृहती** १.१.५, I, पृ० २४५.

७५. **मी.श्लो.वा.** १.१.५, आत्मवाद: १४२. अपि दृश्यतां **तन्त्रवार्तिकम्** (आङ्ग्लानुवाद:), पृ० ५१६

७६. 'येऽस्यागमापायिनो धर्मा— बुद्धि-सुख-दु:खेच्छा-द्वेष-प्रयत्न-धर्माधर्म-संस्कारास् तानपहाय यदस्य स्वं नैजं रूपं ज्ञानशक्ति-सत्ता-द्रव्यत्वादि तस्मिन् नवतिष्ठते इत्यर्थ:।' **शास्त्रदीपिका**, मोक्षवाद:, पृ० ३७०

७७. 'शरीरादतिरिक्तो मानसप्रत्यक्षरूपाहम्प्रत्ययगम्यो ज्ञाता ।' **शास्त्रदीपिका** १.१.५, आत्मवादः; पृ० ३४७ (**प्रकाश-स०**, पृ० ४७६)

७८. 'कथं पुनर् ज्ञातुर् ज्ञेयत्वम् ? न ह्येकस्य कर्तृत्वं कर्मत्वं च स्वात्मनि क्रियाविरोधात् सम्भवति ।' तत्रैव

७९. सुदर्शनाचार्यः, **शास्त्रदीपिका-प्रकाशः**, पृ० ४८७

८०. **मीःश्लो.वा**. १.१.५, आत्मवादः २६

८१. **काशिका** १.१.५.७०, पृ० १३०

८२. तत्रैव

८३. तत्रैव

८४. **प्र.पं.**, पृ० १७२–१७३

८५. तत्रैव, पृ० ३३३

८६. **न्यायसिद्धिः**, पृ० १६८, १७२–१७३

८७. 'अस्ति कश्चिदात्मसमवायी ज्ञान-संवेदनादिपद-पर्यायवाच्यो जानाति-धातूपादानः क्रियाभेदो यस्मिन् नर्थानां प्राप्यकर्मतेति । धात्वर्थमात्रस्य क्रियात्वात् ।' **काशिका** १.१.५, शून्यवादः ६४, पृ० १२३

८८. **मी.श्लो.वा.** १.१.४ (प्रत्यक्ष-सूत्रम्).५३. तु. 'ज्ञानक्रिया हि सकर्मका, कर्मभूतेऽर्थे फलं जनयति पाकादिवत् ।' **शास्त्रदीपिका** १.१ ५, पृ० १५७; 'ज्ञानं नाम मानसी क्रिया ।' **शारी भा** १.१.४ (पूर्वपक्षो भाट्टस्य)

८९. **मी.श्लो.वा.** १.१.५, आत्मवादः ७४–७६

९०. तत्रैव १.१.५, शब्दपरिच्छेदः ६६. तु. 'न हि क्रियास्वभावं ज्ञानमपि तु फलस्वभावम् ।' **न्या मं**, प्रमाण., पृ०

९१. **मी.श्लो वा.** १.१.५, आत्मवादः १४८

—०—

# III

## ज्ञान-कारिका:

प्रमाण-लक्षणं पूर्वं व्यवसेयं यथामति ।
तज् ज्ञानस्याभिधानेन विना नैव प्रसिध्यति । ॥१॥

उपलब्धिर्, मतिर्, ज्ञानं, प्रत्ययो, बुद्धि-संविदौ
शब्दा अर्थप्रकाशार्था न्याय-वैशेषिके नये ।[1] ॥२॥

तदर्था एव ते पूर्वमीमांसायामुदाहृताः ।[2]
बहवो ऽथर्ववेदे ऽन्ये तज्जातीयाश् च, तद् यथा–
'मनसे, चेतसे, धिय, आकूतय, उत चित्तये,
'मत्यै, श्रुताय, चक्षसे, विधेम हविषा वयम् ।[3] ॥३-४॥

योऽप्यनुव्यवसायः स्याज् जानामीत्यनुपूर्वकः[4]
तद्गम्यज्ञानरूपा वै बुद्धिर् नैयायिकस्य च । ॥५॥

स त्वनुव्यवसायः स्यात् प्रत्यक्षं मानसं ननु
ज्ञानं प्रत्यक्षगम्यं वै न्याय-वैशेषिके स्फुटम् । ॥६॥

मुरारिमिश्र इत्याख्यो मीमांसक-महामतिः ।
सोऽप्यनुव्यवसायेन ज्ञान-ज्ञानं व्यवस्यति ।[५] ॥७॥

बुद्धिरर्थप्रकाशात्मा तथा साऽऽत्माश्रयो गुणः ।
न्याय-वैशेषिके ज्ञानं मनोग्राह्यमितीर्यते ।[६] ॥८॥

प्रत्यक्षग्राह्यमेवैतत् प्राभाकर-मतेन तु ।[७]
अन्तःकरणवृत्तिस् तत् साङ्ख्य-योग-नये ननु । ॥९॥

साङ्ख्य-योगे च वेदान्ते बुद्धेर् ज्ञानं विशिष्यते ।
बुद्धिवृत्तिस्वरूपं च ज्ञानं तत्रावधार्यताम् । ॥१०॥

भाट्टे भर्तृप्रपञ्चे चात्मशक्तिर् योग्यताऽपि वा ।[८]
बुद्धी **रत्नाकरे** शक्तिरेका मात्रात्मिकाऽपि च ।[९] ॥११॥

ज्ञानं विषयभेदेन भिन्नं व्यापारलक्षणम् ।
तदाश्रयो भवेद् बुद्धिर् नित्या चैकाऽपि शाबरे । ॥१२॥

स बुद्ध्यद्वैतनित्यत्ववादो वेदान्त-संमितः ।
इदमेवास्मदादीनां मतं सामान्यतः स्थितम् । ॥१३॥

अत्यन्ताभेद-सम्बन्धोऽद्वैते ज्ञानात्मनोर् ननु ।
भाट्टे भर्तृप्रपञ्चे चाप्यभेदः शक्ति-तन्मतोः । ॥१४॥

निरन्वयविनाशेन युक्त उद्भव-युद्-गुणः
न्याय-वैशेषिके ज्ञानमिति ज्ञेयं विशेषतः ।[१०] ॥१५॥

आत्मनः परिणामस् तु ज्ञानं जैमिनि-दर्शने ।[११]
आत्मनः स्रवणं ज्ञानं विज्ञेयं जैन-दर्शने । ॥१६॥

आत्मनो धर्मभूतं च नित्यं द्रव्यान्तरं च तत्
विशिष्टाद्वैत एवात्मा ज्ञानरूपं च शाङ्करे । ॥१७॥

ब्रह्मस्वरूपभूतं च[12] वृत्ति-रूपं तथेतरत्–[13]
अद्वैते द्विविधं ज्ञानमित्यपि स्मर्यतां बुधैः । ॥१८॥

साक्षिज्ञानं च चिद्रूपं, नित्यं, प्रत्यक्षदर्शि तत्
बोधरूपं, तथाऽन्यच् चानित्यं प्रत्ययरूपि च ।[14] ॥१९॥

चिद्रूपमेव चाख्याति ज्ञानशक्तिः कुमारिले ।[15]
प्राभाकर-मते ज्ञानं संविद्-भिन्नं चिदेव च ।[16] ॥२०॥

ज्ञानव्यापारभूता वा, कारणं ज्ञान-कर्मणः,
बुद्धिर् ज्ञानफलाकारा––त्रिधा विप्रतिपत्तयः । ॥२१॥

वेदान्ते द्रव्यरूपा सा, न्याय-वैशेषिके गुणः,
कर्मरूपा भवेद् भाट्टे[17]––विप्रतिपत्तयस् त्रिधा । ॥२२॥

भाट्टे ज्ञानं निराकारं,[18] न्याय-वैशेषिकेऽपि च,[19]
प्रज्ञाकरानुसारेण,[20] साङ्ख्य-योगे, प्रभाकरे,[21]
तथा वैभाषिके ज्ञानं तथा सौत्रान्तिकेऽपि च ।
योगाचारास् तु सामान्याः साकारज्ञानवादिनः । ॥२३-२४॥

ज्ञानं स्मरण-संवादौ, प्रमाण-भ्रम-संशयाः
वदति **काशिका**-कारः 'पञ्चधा विभजामहे' ।[22] ॥२५॥

तदर्थावगतिर् ज्ञानं––भट्टो भणति कण्ठतः ।
अर्थावभास एवैतज्–जयन्तो न्यायवित्तमः–
'न चार्थावगतेरन्यद् रूपं ज्ञानस्य युज्यते ।
'मूर्छादावपि तेनास्य सद्भावो नोपपद्यते ।'[23]
'सचेतनश् चिता योगात्, तद्योगेन विना जडः ।
'नार्थावभासादन्यद्धि चैतन्यं नाम विद्यते ।'[24] ॥२६-२८॥

प्राभाकरे विशेषेण संविज् ज्ञानाद् विशिष्यते ।
स्वप्रकाशा, निराकारा, नित्या, ज्ञानफलं च सा ।[25] ॥२९॥

संवित् प्रत्यक्षमेवातो, ऽनुमेयं ज्ञानमित्यपि ।[२६]
**काशिकायां** भवेत् संविज् ज्ञानपर्यायरूपिणी ।[२७] ॥३०॥

सन्निकर्षात्मकं ज्ञानं सर्वथा मनआत्मनोः ।
संविज् ज्ञानफलं विद्यात्, सा प्रकाशस्वरूपिणी ।[२८] ॥३१॥

परिच्छेदं स्वरूपस्येति प्रत्यक्षं प्रभाकरः ।[२९]
अनुमानं तु सन्मात्रग्राहीत्याह स एव हि ।[३०] ॥३२॥

ज्ञानं तु कारणं प्रोक्तं, संवित् कार्यं फलं तथा ।[३१]
'ज्ञानफलं प्रकाशो' हि संवित्तिर् नाम जायते ।[३२] ॥३३॥

नासंवेद्या न संवेद्या संविद् रूपान्तरे स्थिता ।
संवित्तयैव संवेद्या, न संवेद्यतया क्वचित् ।[३३] ॥३४॥

विषयि-तद्विषयौ सर्वावुपलभ्यौ सहैव तु
मातृ-प्रमिति-मेयेषु संविदेकैव हि त्रिषु ।[३४] ॥३५॥

सुषुप्तस्य प्रकाशन्ते माता मेयानि न क्वचित् ।
अतस् स्वरूपतो ज्ञेयमप्रकाशात्मकं द्वयम् ।[३५] ॥३६॥

विषयवित्त्यहंवित्तिस्वसंवित्तिषु हि त्रिषु
प्रत्यक्षं युगपज् ज्ञेयं त्रिपुट्यध्यक्ष-सञ्ज्ञकम् ।[३६] ॥३७॥

'साक्षात् प्रतीतिः प्रत्यक्षं, मेय-मातृ-प्रमासु सा ।
'मेयेष्विन्द्रियभोगोत्था द्रव्य-जाति-गुणेषु सा ।'[३७] ॥३८॥

प्राभाकर-मते संवित् स्वयमेव प्रकाशते ।
परायत्तप्रकाशत्वं विषयाणां तथाऽऽत्मनः ।[३८] ॥३९॥

संविज् ज्ञानाविनाभूता प्रत्यक्षेति प्रभाकरः ।
अनुमेयं भवेज् ज्ञानमिति ध्येयं विशेषतः ।[३९] ॥४०॥

प्रत्यक्षं संविदर्थश् च, नैव ज्ञानं तु तन्मते ।
फलभूता भवेत् संवित्, कारणं ज्ञानमेव च ।[४०] ॥४१॥

अतोऽनुमानिकज्ञानवादः प्राभाकरं मतम् ।
कण्ठतः स्वीकरोत्येवं स्व-बृहत्यां प्रभाकरः ।[४१] ॥४२॥

संवेद्या न भवेत् संविन् नासंवेद्या कदाचन,
सर्वसंवेद्यभावस्य तन्मूलत्वादिति स्थितिः ।[४२] ॥४३॥

यदि संविदसंवेद्या, नाप्रमेया कदाचन ।
संवित्तयैव संवेद्या, न संवेद्यतया क्वचित् ।[४३] ॥४४॥

जैनाश् च दर्शन-ज्ञाने विवञ्चन्ति विशेषतः ।
दर्शनं निर्विकल्पं स्यात्, सत्तामात्र-प्रदर्शनात् ।[४४] ॥४५॥

देवसूरि-मतेऽतस् तत् प्रमाणाभास एव च ।[४५]
माणिक्यनन्दिनोऽप्येवं प्रभाचन्द्रस्य च स्फुटम् ।[४६] ॥४६॥

## IV

## सुखादि-ज्ञानकारिकाः

ज्ञानरूपं सुखादीनि ज्ञानं तद्भिन्नमेव वा ?
वादिनो विवदन्तेऽत्र भारतीया विशेषतः । ॥१॥

न्याय-वैशेषिके[१] साङ्ख्य-योगे, कान्टे च जार्मने[२]
ज्ञानं सुखादिसम्भिन्नं, मीमांसादावपीति ह । ॥२॥

शान्त्याचार्यस् तु जैनेषु,[३] धर्मकीर्तिश् च सौगतः[४]
केचिदन्येऽपि मन्यन्ते ज्ञानरूपं सुखादिकम् । ॥३॥

V

## ज्ञान-ज्ञान-कारिकाः

प्रभाकरो, मुरारिश् च, शबरो, ऽद्वैतवादिनः,
साङ्ख्याश् च, प्रायशो जैनास्, तथा विज्ञानवादिनः
इच्छन्ति तारतम्येन ज्ञानस्य स्वप्रकाशताम्,
न्याय-वैशेषिका भाट्टाश् च परतःप्रकाशताम् । ।।१-२।।

न्याय-वैशेषिके ज्ञानं चातः प्रत्यक्षमेव वै ।
ज्ञानं भाट्टेऽनुमेयं स्याद् विषये ज्ञातता-गुणात् । ।।३।।

अर्थापत्त्याऽथवा ज्ञान-ज्ञानमुत्पद्यते ननु
अन्यथानुपपन्नत्वाज् ज्ञाततायाः समन्ततः । ।।४।।

तत् प्रत्यक्षीकृतं ज्ञानं प्रत्यक्षमभिधीयते
न्याय-वैशेषिके सर्वमित्यपि स्मर्यतां बुधैः । ।।५।।

अपि विषयसंवेदानुमित्या ज्ञानमिष्यते
कैश्चिन् मीमांसकैरित्यप्युच्यते भास्करेण च ।[१] ।।६।।

III

१. 'बुद्धिरुपलब्धिर् ज्ञानमित्यनर्थान्तरम् ।' न्या० सू० १.१.१५;
'बुद्धिरुपलब्धिर्, ज्ञानं, प्रत्यय इति पर्यायाः ।' प० ध० सं०, पृ० ५२०;
'अर्थप्रकाशो ·· बुद्धिः ।' तर्ककौमुदी, पृ० १०. तु०
'योऽयमर्थप्रकाशः फलम्' । भामती १.१.४;
'तच् चात्मन उपाधिभूतमन्तःकरणं मनो, बुद्धिर्, विज्ञानं, चित्तमिति चानेकधा तत्र तत्राभिलप्यते ।' शारी० भा० २.३.३२, पृ० ५४१

२. 'बुद्धिर् ज्ञानमित्यनर्थान्तरम् । चेतना, बुद्धिर्, ज्ञानं, संविदित्यनर्थान्तरमिति लौकिका बुध्यन्ते ।' काशिका १.१.५, शून्यवादः ३१,

पृ० १०५-१०६; 'ज्ञानकर्मता, ज्ञातत्वं, चेतना, ज्ञानमिति चार्थान्तरमिति लोकसिद्धम् ।' तत्रैव ६४, पृ० १२२; 'अर्थप्रतिबद्धव्यवहारानुगुणो हि पुरुषस्य धर्मविशेषः संवेदनम्। तदेव च बुद्धिरुपलब्धिर्, ज्ञानं, प्रत्ययो, मतिर्, मनीषेत्यादिशब्दैरुच्यते ।' न्यायसिद्धिः, पृ० १५८. तु० 'बुद्धिशब्देन मन एवोच्यते ।' ऋजुविमलापञ्जिका १.१.५, पृ० ७५

३. अथर्व० ६.४१.१

४. 'जानामीत्यनुव्यवसायगम्यज्ञानत्वमेव [बुद्धेर्] लक्षणम् ।' तर्कसङ्ग्रह-दीपिका, अठल्ये-सम्पादिता, खण्डः ३४

५. 'अनुव्यवसायेन (मुरारिमिश्रमते)' । न्या० सि० मु० १३६, पृ० ४८२-४८३

६. न्या० मं०, प्रमेय०, पृ० ६२

७. '...बुद्धिः, सुख-दुःखेच्छा-प्रयत्नाश् च प्रत्यक्षग्राह्याः ।' प्र० पं०, पृ० १५५

८. 'ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् ।' मी० श्लो० वा० १.१.५, आत्मवादः ७३

९. न्यायरत्नाकरः

१०. न्या० मं०, प्रमेय०, पृ० ६२-६७

११. शारी० भाष्यम् १.१.२०; ब्र० सू० ४.४.५

१२. 'दृष्टिरेव रूपमस्य अग्नौष्ण्यवत्, न काणादानामिव दृष्टि-व्यतिरिक्तोऽन्यश् चेतनो द्रष्टा ।' शङ्करः, बृ० उ० भा० १.४.१०

१३. 'तच् चात्मन उपाधिभूतमन्तःकरणं मनो, बुद्धिर्, विज्ञानं, चित्तमिति चानेकधा तत्र तत्राभिलप्यते··· ।' शारी० भा० २.३.३२, पृ० ४४१, अपि दृश्यतामत्र-शङ्करः, ऐ० उ० भा० ३.२

१४. 'बोधस् तु जायते विनश्यति च ।' शङ्करः, के० उ० भा० ११.४; 'बोध-शब्देन बौद्धाः प्रत्यया उच्यन्ते ।' तत्रैव; 'सर्वे प्रत्यया विषया भवन्ति यस्य सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्रः' । तत्रैव; 'द्वे दृष्टी

द्रष्टुर्—नित्या अदृश्या, अन्याऽनित्या दृश्येति'। शङ्करः, बृ० उ० भा० १.४.१०; 'द्वे श्रुती—श्रोत्रस्यानित्या, नित्या चात्मस्वरूपस्य'। ऐ० उ० भा०, अध्यायः २, भूमिका; चित्स्वभाव एवात्मा'। **पञ्चपादिका,** वि० सं० सीरीज, पृ० १६. चिन् नित्या, बोधस् त्वनित्य, इति हृदयम् ।

१५. **मी० श्लो० वा०** १.१.५, आत्मवादः ७३

१६. एतत् सर्वमेवं सङ्ग्राह्यम् — ज्ञानं द्विविधम्

(१) ब्रह्मणः स्वरूपभूतं वृत्तिरूपं चाद्वैतवेदान्ते
(२) चिद्रूपं साक्षिज्ञानं च बोधरूपं चाद्वैतवेदान्ते साङ्ख्य-योगे च
(३) ज्ञानशक्तिश् च ज्ञानं/विषयज्ञानं च भाट्ट-मीमांसायाम्
(४) ज्ञानं संवित् च प्राभाकर-मीमांसायाम्
(५) 'कॉन्शसनेस' इति 'कॉग्नीशन' इति च पाश्चात्यदर्शनेषु

१७. दृश्यतामत्र अ० II टिप्पण्यः ३४-३७; **काशिका,** पृ० ११५ आदि०

१८. दृश्यतामत्र टि० २७

१९. दृश्यतामत्र टि० २८

२०. प्रज्ञाकरगुप्तः **प्रमाणवार्तिकभाष्यम्,** पृ० ३४२

२१. **प्रकरणपञ्चिका,** पृ० १७४, १८०; **ऋजुविमलापञ्जिका** १.१.५, पृ० ७८, ८०; **मी० भा०** १.१.५ (बृ० सं०), पृ० ८०, ८८

२२. 'प्रमाणं, भ्रमः, संशयः, स्मरणं, संवाद इति पञ्चधा ज्ञानं विभजामहे।' **काशिका** १.१.२ (चोदना-सूत्रम्) २०

२३. **मी० श्लो० वा०** १.१.५, आत्मवादः ६६

२४. **न्या० मं०,** प्रमेय० पृ० ६

२५. **प्र० पं०,** पृ० ३३३

२६. 'अर्थविषया हि प्रत्यक्षा बुद्धिर् न बुद्धिविषया।' **मी० भा०** १.१.५, पृ० ८०-८१. तु० **बृहती** १.१.५, पृ० ८२, तदग्रे च; **प्र० पं०,** पृ० १८८-१९०.

२७. **काशिका**, १.१.५, पृ० १०६

२८. **प्र० पं०**, पृ० १६२; **मीमांसाभाष्य-परिशिष्टः** १.१.५, पृ० १७

२९. **बृहती**, पृ० ८४

३०. तत्रैव, पृ० ८२

३१. **ऋजुविमलापञ्जिका**, पृ० ८०

३२. **मीमांसाभाष्य-परिशिष्टः**, १.१.५, पृ० १७

३३. 'न ब्रूमः—न संवेद्या संवित् इति। संवित्तयैव हि संवित् संवेद्या, न संवेद्यतया। नास्याः कर्मभावो विद्यत इति। कर्म च संवेद्याभिधेयम्, न संवित्। तस्मान् न पृथक् सवेद्यतया ग्रहीतुं शक्यते। न चासंवेद्यैव संवित्, तन्मूलत्वात् सर्वभावानां संवेद्यभावस्य।' **बृहती**, पृ० ८२-८३, तु० **प्र० पं०**, पृ० ३३४

३४. **न्यायसिद्धिः**, पृ० १६८

३५. तत्रैव, पृ० १६८, १७२-१७३

३६. **प्र० पं० न्यासिद्धिश्** च, पृ० १६७ तदन्वपि, ३३३

३७. तत्रैव, पृ० १०४, १६७ तदन्वपि

३८. तत्रैव, पृ० ३३३

३९. 'सा च संविन् न बुद्धिरूपा, नाप्यात्मरूपा; तयोः शब्दादितुल्यत्वात् संविद्व्यतिरेकेणापि भावात् तादात्म्यानुपपत्तेः। ज्ञानात्मकता तु संविदो युक्ता, ज्ञानाव्यभिचारित्वात्। तदाह— ज्ञानाविनाभूता च संविदिति।' **ऋजुविमलापञ्जिका**, पृ० ७५-७६; 'प्रत्यक्षा च नः संवित्।' **बृहती**, पृ० ७७; 'मीमांसकस्य बुद्धेरनुमेयत्वात्।' तत्रैव, पृ० ७७-७८

४०. 'संविदर्थंग् च द्वयं तावत् प्रत्यक्षं, न तु ज्ञानम्। कथमिदानीं ज्ञानसिद्धिः? उच्यते—फलभूतायाः संविदः कार्यरूपत्वात्, कार्यस्य च कारणमन्तरेणापुपपत्तेः, नित्यकार्योदयापत्त्या चात्मनः स्थिरस्य कारणत्वे निरस्ते, कादाचिक्तं ज्ञानमनुमीयते।' **ऋजुविमलापञ्जिका**, १.१.५, पृ० ८१

४१. 'ज्ञानं प्रत्यक्षमित्ययुक्तम्।' **बृहती** १.१.५, पृ० ८४; 'आनुमानिकज्ञानवादिनस् तु नायं पर्यनुयोगः।' तत्रैव, पृ० ८१

४२. न ब्रूमः न संवेद्या संविदिति । न चासंवेद्यैव संवित्, तन्मूलत्वात् सर्वभावानां संवेद्यभावस्य ।' तत्रैव, पृ० ८३

४३. 'संवित्तयैव हि संवित् संवेद्या, न संवेद्यतया । किमसंवेद्यं विज्ञानम् ? बाढमसंवेद्यं, न त्वप्रमेयम ।' तत्रैव, पृ० ८३-८४

४४. 'विषय-विषयि-सन्निपातान्तरसमुद्भूत-सत्तामात्रगोचरदर्शनात्...।' देवसूरिः, प्रमाणनयतत्त्वालोकालङ्कारः २.७

४५. तत्रैव ६. २४, २५

४६. माणिक्यनन्दी, परीक्षामुखसूत्रम् ६.२ (प्रभाचन्द्रप्रणीत-प्रमेयकमलमार्तंड-सहितम्)

IV

१. न्या० वा०, पृ० ३६

२. इमैन्युएल्-कान्टः, क्रिटीक ऑव प्योर रीजन, पृ० ८७

३. शान्त्याचार्यः, न्यायावतारवार्तिकवृत्तिः, पृ० २०-२१

४. धर्मकीर्तिः, प्रमाणवार्तिकम् २, २५१-२५५

V

१. भास्कर भाष्यम्, पृ० ६; 'योऽपि हि विषयसंवेदानुमेयं ज्ञानमिच्छति सोऽप्येवं पर्यनुयोज्यः ।' न्यायकन्दली, पृ० २३४

--०--

## VI

# ज्ञान-प्रामाण्याप्रामाण्य-कारिकाः

ज्ञानं स्वतः प्रमाणं वा परतो वेति संशये
वादिनो विवदन्ते, ऽग्रे यथा सम्यक् समीक्ष्यते । ॥१॥

ज्ञानं स्वार्थप्रकाशात्मं, स्वरूपस्य प्रकाशकम्,
स्वप्रामाण्यप्रकाशात्मं स्वतःप्रामाण्यवादिनाम् । ॥२॥

न बोधात्मकतामात्रा ज्ञानानां स्यात् प्रमाणता ।
ज्ञानप्रामाण्यमस्त्यर्थाविसंवादित्वमेव वा ?[१] ॥३॥

'प्रमाणत्वाप्रमाणत्वे स्वतः साङ्ख्याः समाश्रिताः ।
'नैयायिकास् ते परतः, सौगताश् चरमं स्वतः ।

'प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः ।
'प्रमाणत्वं स्वतः प्राहुः परतश् चाप्रमाणताम् ।'[२]

इत्युक्तिः सुखबोधाय बालानां ज्ञायतां बुधैः ।
सम्यग्बोधाय वृद्धानां किञ्चिदग्रे निवेद्यते ।

विशेष इदमस्त्यत्र, यथाऽग्रे दर्शयिष्यते,
बौद्धपक्ष उपर्युक्तौ मृषार्थः प्रतिपादितः । ॥४–७॥

प्रमाणत्वाप्रमाणत्वे साङ्ख्य-योगे स्वतः क्वचित्,
परोक्त्या,[२] न तु शास्त्रोक्त्या,[३] न जाने शास्त्रनिर्णयम् । ॥८॥

परतस् त उभे ज्ञेये न्याय-वैशेषिके ननु
क्रमात् प्रवृत्तिसामर्थ्यादसामर्थ्याच् च निश्चिते ।[४] ॥९॥

यत्र प्रवृत्तिसाफल्यात्मानुमानं प्रवर्तते
प्रामाण्यं तत्र ज्ञानस्य, तदप्रामाण्यमन्यथा । ॥१०॥

अनभ्यासदशापन्ने मात्वामात्वे तथैव तु,
तथाऽभ्यासदशापन्नेऽपि त इत्यवधार्यताम् । ॥११॥

किन्तु प्रवृत्तिसामर्थ्यजातीयत्वं तथेतरत्
यथाक्रमं विजानीयान् मात्वामात्वेऽवधारिते ।[५] ॥१२॥

न परीक्ष्यं फलज्ञान-प्रामाण्यं वै कदाचन ।
जलज्ञानाज् जलप्राप्त्या पिपासैव प्रशाम्यति । ॥१३॥

परं प्रवृत्तिसामर्थ्यादनुमेया प्रमाणता ।
अनुमानं स्वतो मानं वाचस्पत्यनुसारतः ।[६] ॥१४॥

अनुमानोपमानानुव्यवसायेषु सुस्फुटम्
धर्मिष्वपि स्वतोमात्वं वाचस्पतिनये ननु । ॥१५॥

तत्र विप्रतिपन्नानां प्रामाण्यं परतोऽपि च ।
सुस्फुटो न्याय-सिद्धान्तः परिशुद्ध्यामुदीरितः ।[७] ॥१६।

प्रामाण्यमनुमानेन, ज्ञानं प्रत्यक्षतः स्मृतम् ।[८]
प्रत्यक्षं मानसं चानुव्यवसायात्मकं ननु । ॥१७॥

तत्प्रत्यक्षं, धर्मिमात्रगोचराध्यक्षमप्युत,
यद् ज्ञानगतसादृश्यज्ञानं तच् च तृतीयकम्,

अनुमानोपमाने च विप्रतिपन्नमन्तरा–
पञ्च ज्ञानानि चैतानि प्रत्यक्षाणि विशेषतः। ॥१८–१९॥

मीमांसायां च वेदान्ते स्वतःप्रामाण्यमिष्यते।
अप्रामाण्यं तु पुन्दोषात् परतस् तन्मते ननु। ॥२०॥

'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्
'न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते। ॥

'आत्मलाभे च भावानां कारणापेक्षता भवेत्।
'लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु। ॥

'जातेऽपि यदि विज्ञाने तावन् नार्थोऽवधार्यते
'यावत् कारणशुद्धत्वं न प्रमाणान्तराद् भवेत्। ॥

'यदा स्वतः प्रमाणत्वं तदाऽन्यन् नैव गृह्यते
'निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः। ॥

'तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
'अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते । ॥

'अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः।
'वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात्। ॥

'दोषतश् चाप्रमाणत्वे स्वतःप्राण्यवादिनाम्।'[१०]
इति कुमारिलस्योक्तिर् मीमांसार्थप्रकाशिनी॥ २१–२७॥

तथाऽपि नियमोऽत्रैको निषेधात्मा विशेषतः
अबाधितत्वतः ख्यातः स्वतःप्रामाण्य-सीमकः। ॥२८॥

तथैवात्र विजानीयात् साङ्ख्य-योगेऽपि कुत्रचित्
पार्थसारथिमिश्रस्योक्तवती शास्त्रदीपिका । ॥२९॥

बौद्धैकदेशि-पक्षे च परैरुक्तं क्वचित् क्वचित्
प्रामाण्यं परतो ज्ञेयमप्रामाण्यं स्वतस् तथा ।[११] ॥३०॥

सुप्रसिद्धोऽस्ति विद्वत्सु त्वेतत् पक्षचतुष्टयम् ।
कमलशील-मत्या तु बौद्धोऽनियमपक्षधृक् ।[१२] ॥३१॥

'किञ्च सर्वप्रमाणानां प्रामाण्यं निश्चितं यदि
'स्वत एव, तदा कस्मान् मतभेदः प्रवादिनाम् ? ॥

'येनैकः स्वत एवेति प्रोच्चैर् नियम उच्यते,
'किञ्चित् स्वतोऽन्यतः किञ्चित् परैश् चानियमो मतः । ॥

'विवादो भ्रान्तितो यस्मात् सा च निश्चयबाधिता ।
'निश्चिन्वन्तस् ततस् तत्त्वं विवदेरन् न वादिनः । ॥

'स्वतः सर्वप्रमाणानां प्रामाण्यस्य विनिश्चये
'न विसंवादभाक् कश्चिद् भवेन् निश्चयवृत्तितः । ॥

'अप्रमाणे प्रमाणत्वबुद्ध्या वृत्तो हि वञ्च्यते ।
'स्वतःप्रामाण्यबोधात् तु विपरीतो न कश्चन ।'[१३] ॥

शान्तरक्षित इत्याह स्वतःप्रामाण्य-दूषणे ।
तदेव दूषणं मन्ये स्वतोऽप्रामाण्यगाम्यपि । ॥३२–३७॥

धर्मकीर्तिमते ज्ञानस्वरूपस्य स्वतो गतिः ।[१४]
'प्रामाण्यं व्यवहारेण'[१४क] परतो, न स्वतः क्वचित् । ॥३८॥

तन् मनोरथनन्द्याहाभ्यासिनां स्वत एव तु,
अन्यत्र परतो ज्ञेयं प्रामाण्यं सर्वथा बुधैः ।[१५] ॥३९॥

प्रामाण्यविषये ताभ्यां व्याख्येयं क्रियते भृशम्,
विस्तराद् वदतो नैतावाप्रामाण्यस्य का गतिः। ॥४०॥

स्वत आभ्यासिके ज्ञाने प्रामाण्यं चाप्रमाणता।
किन्त्वनाभ्यासिके ज्ञाने उभे परत एव च–

इत्यनियमवाद्याह भदन्तः शान्तरक्षितः
अप्रामाण्यकथां चापि योजयन् वचने स्वके–

'आभ्यासिकं यथा ज्ञानं प्रमाणं गम्यते स्वतः,
'मिथ्याज्ञानं तथा किञ्चिदप्रमाणं स्वतः स्थितम्।'[१६] ॥४१–४३॥

स्वसंवेदनमित्याख्यं, तथाऽभ्यासवदित्यपि,
योगिज्ञानाख्यमित्येवं प्रत्यक्षाणि, तथाऽनुमा,
अपि चार्थक्रियाज्ञानमिति ज्ञानानि पञ्च वै
तानि स्वतःप्रमाणानि–तत्त्वसङ्ग्रहपञ्जिका।[१७] ॥४४–४५॥

अप्रामाण्यं स्वतः किं वा परतो वेति संशये
बौद्धा मौना इवाभान्ति विशेषोऽयं विमृश्यताम्। ॥४६॥

स्वतस् त्वर्थक्रियाज्ञानं प्रामाण्यं लभते ननु
तथाभ्यासदशापन्नं ज्ञानं जैनानुसारतः। ॥४७॥

प्रामाण्यमनुमानस्य स्वतः प्रामाण्यमिष्यते।
प्रमाणं परतः सर्वं शेषं ज्ञानं तु तन्मते।'[१८] ॥४८॥

'प्रामाण्यं व्यवहाराद् धि' इत्यकलङ्कमतं दृढम्।'[१८क]
तत्प्रामाण्यं स्वतश् चापि परतोऽनियमादिति
माणिक्यनन्दि-सिद्धान्तो,[१९] देवसूरि-मतं त्विदम्–
प्रमाणत्वाप्रमाणत्वे ह्युत्पत्तौ परतो ननु। ॥४९–५०॥

ज्ञप्तौ ते तु स्वतश् चापि परतोऽनियमादिति
इदं जैनमतं मुख्यं समं बौद्धमतेन भोः ! ॥५१॥

किं पुनः परतो वाऽपि स्वतोऽप्रामाण्यमिष्यते ?
जैना बौद्धवदेवात्र मौनास् तिष्ठन्ति सर्वथा ॥५२॥

पाश्चात्ये दर्शने तिस्रो दृष्टयः प्रचरन्ति वै
प्रामाण्यविषये, ताश् चाप्यवधेया प्रसङ्गतः । ॥५३॥

आद्या संवादिता-दृष्टिर्, द्वितीया सङ्गतिस् तथा,
तृतीयाऽर्थक्रियासिद्धिश् चेति दृष्टित्रयी मता । ॥५४॥

तिस्रोऽपि दृष्टयश् चैता न्याय-वैशेषिकैर् मताः ।
प्रामाण्यं परतस् तेषामप्रामाण्यं तथैव च । ॥५५॥

दृष्टा संवादिता ज्ञाने तद्वति तत्प्रकारके
किञ्चिद् भिन्नाऽपि पाश्चात्य-राद्धान्तादिति धार्यताम् । ॥५६॥

सङ्गतिस् तर्क-राद्धान्ते, सामान्येनापि सर्वथा
तथा प्रवृत्तिसाफल्येऽर्थक्रियासिद्धिरेव च । ॥५७॥

सर्वोऽप्यर्थक्रियावादः पाश्चात्योद्भावितो ननु
बौद्धस्यार्थक्रियावादानुकारीत्यवधार्यताम् । ॥५८॥

कानिचित् परतश् चापि स्वतो ज्ञानानि कानिचित्
एकस्य ज्ञानमन्यस्यानुमेयमिति इति धारणा
रामानुजेन श्रीभाष्ये प्रतिज्ञाता विशेषतः ।
स्मर्तव्यं पूर्वविज्ञानं ज्ञातृ रामानुजस्य च ।[१०] ॥५९–६०॥

बौद्धस्यार्थक्रियाज्ञानसंवादात् स्यात् प्रमाणता ।
तत् तु मीमांसकोऽपास्ति, जयन्तोदाहृतं यथा–

'अपि चोत्तरसंवादात् पूर्वपूर्वप्रमाणताम्
'वदन्तो नाधिगच्छेयुरन्तं युगशतैरपि । ॥

'सुदूरमपि गत्वा तु प्रामाण्यं यदि कस्यचित्
'स्वत एवाभिधीयेत, को द्वेषः प्रथमं प्रति ? ॥

'कस्यचित् तु यदीष्येत स्वत एव प्रमाणता,
'प्रथमस्य तथाभावे विद्वेषः किन्निबन्धनः ?'[२] ॥

'तस्मादर्थक्रियाज्ञानव्यभिचारावधारणात्
'तत्प्रामाण्यपरीक्षायामनवस्था न शाम्यति ।'[३] ॥६१–६५॥

भ्रमप्रकोपपातं स्याद् यावन् मर्त्यो महीतले
स्वतःप्रामाण्यवादस्य निरपेक्षस्य का कथा ? ॥६६॥

## टिप्पण्यः

१. 'उम्वेयकस् त्वाह, ''न बोधात्मकत्वं नाम ज्ञानानां प्रामाण्यम् । किं तर्हि ? अर्थाविसंवादित्वम् । तथा हि—सत्यपि बोधात्मकत्वे यत्रार्थाविसंवादित्वं नास्ति तत्राप्रामाण्यम्, यथा शुक्तिकायां रजतज्ञानस्य । विनाऽपि बोधकत्वं यत्रार्थाविसंवादित्वमस्ति तत्र प्रामाण्यम्, यथाऽग्नौ धूमस्य ।' कमलशीलः, **तत्त्वसङ्ग्रहपञ्जिका** ३१२२, पृ. ६८२

२. **सर्वदर्शनसङ्ग्रहः**, जैमिनि-दर्शनम्

३. सर्वदर्शनसङ्ग्रहकृच्-छास्त्रदीपिकाकृदादीनामुक्त्या । तु. **शास्त्रदीपिका**, पृ. ५४

४. **न्यायमञ्जरी**, प्रमाण-प्रकरणम्, पृ. १६०—१७४

५. तत्रैव, पृ. १५६

६. **न्यायवार्तिकतात्पर्यटीका** १.१.१, चतुर्ग्रन्थिका, पृ. १२—१३

७. **न्यायवार्तिकतात्पर्यपरिशुद्धिः** १.१.१, चतुर्ग्रन्थिका, पृ. ६८—१००

८. ज्ञानं हि मानसप्रत्यक्षेणैव गृह्यते, प्रमाणं पुनरनुमानेन । **तर्कभाषा,** पृ. १४१

९. **न्यायवार्तिकतात्पर्यटीका** १.१.१, पृ. २९—३०; **न्यायवार्तिकतात्पर्यपरिशुद्धिः** पृ. ९६, ९९—१००

१०. **मीमांसाश्लोकवार्तिकम्,** चोदनासूत्रं द्वितीयम्:, श्लोकाः ४७—४९, ५२—५४, ५५

११. **सर्वदर्शनसङ्ग्रहे** यथा

१२. न हि बौद्धैरेषां चतुर्णामेकतमोऽपि पक्षोऽभीष्टः, अनियमपक्षस्येष्टत्वात् । …अत एव पक्षचतुष्टयोपन्यासोऽप्ययुक्तः, पञ्चमस्याप्यनियमपक्षस्य सम्भवात् । **तत्त्वसङ्ग्रह-पञ्जिका** ३१२२, पृ. ९८१

१३. **तत्त्वसङ्ग्रहः** २९४३—२९४७

१४. **प्रमाणवार्तिकम्** १.६

१४क. तत्रैव १.७

१५. मनोरथनन्दी, **प्रमाणवार्तिक-वृत्तिः** १.७

१६. **तत्त्वसङ्ग्रहः** ३०९९

१७. **तत्त्वसङ्ग्रह-पञ्जिका** २९४४, पृ. ९३८

१८. **प्रमाणमीमांसा-वृत्तिः** १.१.८

१८क. **अकलङ्कग्रन्थत्रयम्,** पृ. १४

१९. माणिक्यनन्दी, **परीक्षामुखसूत्रम्** १.१३

२०. कानिचिद् ज्ञानानि स्वतः, कानिचिच् च परतः । एकस्य ज्ञानमन्यस्यानुमेयम्, पूर्वज्ञानं ज्ञातुः स्मर्तव्यम् ।’**श्रीभाष्यम्** १.१.१

२१. **न्यायमञ्जरी,** प्रमाण०, पृ. १४९

२२. तत्रैव, पृ० १५०

—०—

## प्रमाप्रमाणार्थकारिकाः

### VII

न्याय-वैशेषिके ज्ञानं स्मृतिश् चानुभवस् तथा ।
संस्कारमात्रजन्यं यज् ज्ञानं तत् स्मृतिरुच्यते । ॥१॥

यत् तद्भिन्नं भवेद् ज्ञानं तच् चानुभव-सञ्ज्ञकम् ।
यथार्थश् चायथार्थश् चानुभवो द्विविधो मतः । ॥२॥

अयथार्थोऽप्रमा ज्ञेयो, यथार्थानुभवः प्रमा ।
इति ज्ञेयं समासेन न्यायवैशेषिकैरितम् । ॥३॥

ज्ञानं सम्यगसम्यग् वोपलब्धिर् वाऽनुभूतयः ।
प्रमा तदेव ज्ञानं यत् तद्वति तत्प्रकारकम् ।[1] ॥४॥

असम्यगप्रमा प्रोक्ताऽविद्या वा कामचारतः ।
अज्ञानं च मृषाज्ञानं चोभेऽपि स्तोऽप्रमात्मके । ॥५॥

'ज्ञानत्वं प्रामाण्यं' मन्यन्ते ये स्मृतिं प्रमामाहुः ।
'अगृहीतग्राहित्वं' ये नेच्छन्ति स्मृतिं चैवम् । ॥६॥

यथार्थज्ञान-सत्यत्व-किञ्चिद्भिन्ना प्रमा स्मृता ।[2]
केषाञ्चिदनुसारेण स्मृति-भिन्नाऽपि सा धृता । ॥७॥

प्रमा-प्रमात्वयोः स्थाने मीमांसायां विशेपतः
प्रमाण-शब्द आयाति प्रामाण्य-पदमेव च । ॥८॥

स्मृतिश् च **तैत्तिरीयारण्यके** प्रोक्ता प्रमैव तु।
यत् प्रमाणान्तरैः सार्द्धं स्मृत्युल्लेखं करोति हि--
'स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्—
'एतैरादित्यमण्डलं सर्वैरेव विधास्यति।[3] ॥९-१०॥

चतुर्विधासु विद्यासु स्मृतिरप्यनुगण्यते।
स्फुटं प्रशस्तपादेन **पदार्थधर्मसङ्ग्रहे**।[4] ॥११॥

बहवोऽनुसरन्त्यन्ये न्यायवैशेषिका इमम्—
श्रीवल्लभश्[5] च, लौगाक्षिभास्करः,[6] श्रीधरो[7] यथा ॥१२॥

वैशेषिकेषु विख्याता या च **मानमनोहरा**।
तत्रापि स्मृति-प्रामाण्यं स्थापितं सुमनोहरम्।[8] ॥१३॥

प्रमात्वमेव नेच्छन्ति त्वन्ये नैयायिकाः स्मृतेः।
जयन्तो **न्यायमञ्जर्यां** यथाऽऽह न्यायवित्तमः—
'न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम्।
'अपि त्वनर्थजन्यत्वं तदप्रामाण्यकारणम्।'[9] ॥१४-१५॥

असत्त्वाच् चापि तत्काले स्मृत्यारूढस्य वस्तुनः
प्रमाणता-पदं नैव कदाऽप्यारोहति स्मृतिः।[10] ॥१६॥

स्मृतिर् नैवाप्रमा नापि प्रमाऽन्नम्भट्ट-दर्शने।
अप्रमायाः प्रमायाश् च विभागोऽनुभवस्य हि।[11] ॥१७॥

द्विधाऽभ्युपगमो दृष्टोऽद्वैतवेदान्त-दर्शने
**वेदान्तपरिभाषायां** प्रमाया लक्षणे स्फुटम्।[12] ॥१८॥

विद्यात्वेऽप्यप्रमाणं स्यात् स्मृतिः श्रीधर-दर्शने।
अतीतविषयत्वाद् वै, न त्वनर्थजता-कृते।[13] ॥१९॥

न लोकव्यवहारादन्यत् प्रमाणत्व-स्यसाधनम ।
व्यवहारात् प्रमाणत्व जयतीर्थ-मते स्मृतेः ।[१४] ॥२०॥

नान्यप्रमाणसापेक्षा काचित् **स्वस्फुरणे** स्मृतिः ।
स्व-स्फुरणे प्रमा साऽतो, विषय-स्फुरणेऽप्रमा ।
सा पूर्वानुभवापेक्षा विषयस्फुरणे मता ।
इत्याह मेघनादारिर् **नयद्युमणि**-पुस्तके ।[१५] ॥२१-२२॥

नेष्टं स्मृतेः प्रमाणत्वं पुरुषोत्तम-दर्शने ।
तन्मते[१६] स्वप्न ईशस्य सृष्टी, रामानुजेऽपि च ।[१७] ॥२३॥

वेदान्तदेशिकोऽप्येवं स्मृतेः प्रामाण्यमिच्छति,
यथोक्तं तेन हि **न्यायपरिशुद्ध्यां** विशेषतः—
'स्मृतिमात्राप्रमाणत्वं न युक्तमिति वक्ष्यते,
'अबाधित-स्मृतेर् लोके प्रमाणत्व-परिग्रहात् ।'[१८]
इति वेङ्कटनाथोक्तिः स्मृतिप्रामाण्यलापिका
दृढीकृता प्रयत्नेन बह्वीभिर् युक्तिभिः सह ।[१९] ॥२४-२६॥

'सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं, स्मृतिरन्यथा'
इति कुमारिलः प्राह प्रमाप्रकृतिचिन्तने ।[२०] ॥२७॥

प्रत्यभिज्ञाऽप्रमाणं स्याद् दिङ्नागस्यानुसारतः ।
स्मृति-प्रत्यक्ष-मिश्रत्वाज् ज्ञानत्वं न भजत्यसौ । ॥२८॥

इच्छतो न्याय-मीमांसे सविकल्पात्मिकां तु ताम् ।
प्रत्यक्षं निर्विकल्पं साऽद्वैतवेदान्तदर्शने । ॥२९॥

अन्तर्भूतोपमाना सा प्रमाणं जैन-दर्शने ।
परोक्षज्ञानमेवासौ तत्समयानुसारतः । ॥३०॥

स्याद् धारावाहिकं ज्ञानं प्रमाऽद्वैते विशेषतः ।
सांख्य-योगे तथा भाट्टमीमांसायामपीति ह ।।३१।।

यद् धारावाहिकं ज्ञानं प्रमाणं तदपीति ह ।
भवेन् नवनवज्ञानक्रमस् तत्-पार्थसारथिः । ।।३२।।

धर्मोत्तरानुसारेण तन् नार्हति प्रमाणताम् ।
आद्यो ज्ञानक्षणो ग्राह्यो, ऽध्यवसेयास् तथेतरे । ।।३३।।

स्याद् धारावाहिकं ज्ञानं ज्ञातज्ञान-परम्परा ।
स्तब्धचित्तेऽप्रमैवातस्, तार्किकैरेतदुच्यते । ।।३४।।

अप्युक्तं तैश् च यच् चित्तमस्तब्धं च समाहितम्
उद्घाट्यति ज्ञानेऽस्मिन् नवज्ञान-परम्पराम् । ।।३५।।

तद् धारावाहिकं ज्ञानं प्रमैव स्यादसंशयम् ।
इत्युच्यते जयन्तेन धारावाहिक-चिन्तने । ।।३६।।

अद्वैते तद्विधे ज्ञाने ज्ञानभेदो न चेष्यते ।
तद् धारावाहिकं ज्ञानं ज्ञानमेकं, प्रमाऽप्यतः । ।।३७।।

क्षणविवेकदर्शित्वाद् योगिनस्तु प्रतिक्षणम्
भवेन् नवं नवं ज्ञानं, तत्प्रमाऽतो, न संशयः । ।।३८।।

**हेतुबिन्दू** च **तट्टीका** द्योतयतो विशेषतः ।
प्रमाऽप्रमे तु सापेक्षे, एतस्माद् बौद्धददर्शने । ।।३९।।

'यथार्थानुभवो मानमनपेक्षतयेष्यते'
इत्युदयनराद्धान्ते प्रमा-भाषा विशेषतः ।[२१] ।।४०।।

निःसन्दिग्धा भवेद् विद्या, ऽध्यवसायात्मिकाऽपि च,
अबाधिता ऽपि सा प्रोक्ता श्रीधरेण प्रमात्मिका ।[२२] ।।४१।।

भूतार्थतां च यज् ज्ञानमवाप्नोति यदृच्छया
स्यात् तत् प्रमापदानर्हं–जयतीर्थमतेन च ।[२३] ।।४२।।

यद् यथावस्थितं ज्ञानं व्यवहारानुगुण्यतः
वेदान्तदेशिकार्येण तत् प्रमात्वेन गृह्यते।[२४] ॥४३॥

मोक्षोपयोगि यज् ज्ञानं तद् यथार्थं प्रमात्मकम्।
अयथार्थं भवेच् छेषमप्रमा जैन-दर्शने। ॥४४॥

सम्यग्दृष्टेश् च यज् ज्ञानं सम्यग्ज्ञानं जिनागमे।
मिथ्यादृष्टेश् च यज् ज्ञानं मिथ्याज्ञानं तथैव च।[२५] ॥४५॥

सम्यग्दृष्टेश् च विश्रान्तिः सर्वथा व्यावहारिकी
सम्यग्ज्ञानमिति प्रोक्ता तूमास्वाति-विधानतः।
मिथ्यादृष्टेश् च विज्ञानं सर्वथा व्यावहारिकम्
मिथ्याज्ञानमिति प्रोक्तं तद्विधानत एव च।[२६] ॥४६-४७॥

जिनागमानुसारेण दृष्टिरेव नियामिका
प्रमायाश् चाप्रमायाश् चोन्मत्तज्ञानं सदाऽप्रमा।[२७] ॥४८॥

विद्या-(ऽ)विद्या-विवेकेऽपि यजुर्वेद-कृते तथा
परा-(ऽ)परा-विभागेऽपि विद्यायाः श्रुति-चर्चिते
प्रमाप्रमाभिदैवोक्ता सर्वथा पारमार्थिकी।
ज्ञानाज्ञान-प्रभेदोऽपि **गीतायामेवमेव**, यत्—
'अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्
'एतज् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा।'[२८] ॥४९-५१॥

ज्ञानं त्रिविधमाख्यातं पुरुषोत्तम-दर्शने—
सात्त्विकं, राजसं चापि, तामसं; सात्त्विकं प्रमा।[२९] ॥५२॥

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते
'अविभक्तं विभक्तेषु तज् ज्ञानं विद्धि सात्त्विकम्।[३०] ॥५३॥

भवेत् तद् राजसं ज्ञानं व्यवहारोपयोगि यत्।
प्रमाणं लौकिकं तस्याप्रामाण्यं परमार्थतः।[३१] ॥५४॥

'पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्
'वेत्ति सर्वेषु भूतेषु तज् ज्ञानं विद्धि राजसम् ।'[32] ॥५५॥

तत् त्वप्रमाणमेव स्याद् यत् तामसमुदाहृतम् ।
सात्त्विकं ज्ञानमेव स्यात् वस्तुतो निर्विकल्पकम् ।[33] ॥५६॥

'यत् तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम्
'अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ।'[34] ॥५७॥

प्रमाणं च प्रमेयं च शब्दौ द्वावपि शास्त्रतौ
**मैत्र्युपनिषदि** प्राप्तौ प्रथमं देववाङ्मये ।[35] ॥५८॥

दार्शनिकार्थमप्यासीत् 'प्रामाणिक'-पदं पुरा
भारतैतिह्यतः सिद्धो यौनानैर् लिखितं तु तत् ।[36] ॥५९॥

'मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते—
'अनिर्ज्ञातमर्थं ज्ञास्यामीति' इत्याह पतञ्जलिः ।[37]
'यस् त्वप्रमत्तगीतस् तत् प्रमाणं' चापि तन्मते ।[38]
इति विद्यात् समासेन पतञ्जलि-मतं स्फुटम् । ॥६०-६१॥

त्रिधा भिन्ना प्रमाणस्य पदार्थाः स्युर् विकल्पतः–
आद्यः 'प्रमीयतेऽनेन', मध्यमः 'प्रमितिस्' तथा,
चरमः 'प्रमिणोति' इति प्रमाणार्थविचारकाः ।[39]
प्रमाणं चित्तवृत्तित्वान् निरोध्यं योगदर्शने । ॥६२-६३॥

प्रमाणं चित्तवृत्तिः स्यात्, पञ्चतय्यश् च वृत्तयः–
विपर्ययो, विकल्पश् च, निद्रा, च स्मृतिरप्युत ।[40] ॥६४॥

यन् निर्विकल्पकं ज्ञानं दर्शनाख्यं जिनागमे
न प्रमाण-पदं विन्देत्, 'प्रमाणाभास' एव तत् ।[41] ॥६५॥

प्रमाणार्थे प्रयुज्येते सूत्रे स्थानाङ्ग-नामके
व्यवसायस्[42] तथा हेतुर्[43], विभागोऽग्रेकृतस् तयोः । ॥६६॥

षट्कारकानुसारेण षडर्थान् धारयत्यहो !
प्रमाण-शब्द इत्याह जैनः सिद्धगणिर् महान्—
आत्मा, ऽर्थः, साधनं, चार्थक्रिया, कारणसञ्चयः,
क्षयोपशम इत्येवं; भावे प्रमितिरित्यपि ।[४४] ॥६७-६८॥

जैनाः 'प्रमाणमविसंवादिज्ञानं' भणन्त इत्याहुः—
'अनधिगतार्थाधिगम'-परं लक्षणं विद्यात् ।[४५] ॥६९॥

'प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।'[४६]
'व्यवसायात्मकं ज्ञानमात्मार्थग्राहकं मतम् ।'[४७] ॥७०॥

निर्वचनं प्रमाणस्य प्रमाकरणमित्यपि ।
करणार्थाभिधानो हि 'प्रमाणं' – न्यायभाष्यकृत् ।[४८] ॥७१॥

अनधिगतं विज्ञानं त्वबाधितं यद् भवेदसन्दिग्धम्
तत्साधनं प्रमाणं, भामत्या मान-लक्षणं विद्यात् ।[४९] ॥७२॥

कारणदोषशून्यं यद्, बाधकज्ञानवर्जितम्,
तथाऽगृहीतसङ्ग्राहि प्रमाणं – पार्थसारथिः ।[५०] ॥७३॥

निःसन्दिग्धा प्रतीतिर् या, ऽध्यवसायात्मिकाऽपि या,
अबाधिताऽपि या सैव विद्या श्रीधर-दर्शने ।[५१] ॥७४॥

'तस्माद् दृढं यदुत्पन्नं न विसंवादमृच्छति
'ज्ञानान्तरेण, विज्ञानं तत् प्रमाणं प्रतीयताम् ।'[५२] ॥७५॥

अज्ञातार्थस्य यज् ज्ञानं तदेव विदधाति यत्
तत्प्रमाणमिति प्राह दिङ्नागो बौद्धतार्किकः ।[५३] ॥७६॥

'प्रमाणमविसंवादि ज्ञानं, अर्थक्रियास्थितिः
'अविसंवादनं, शाब्दे ऽप्यभिप्रायनिवेदनात् ।
'गृहीतग्रहणान् नेष्टं सांवृतम्, धीप्रमाणता ।
'प्रवृत्तेस् तत्प्रधानत्वाद् धेयोपादेयवस्तुनि ।

'प्रामाण्यं व्यवहारेण शास्त्रं मोहनिवर्तनम् ।
'अज्ञातार्थप्रकाशो वा स्वरूपाधिगतेः परम् ।'[५४] ॥७७-७९॥

'अविसंवादनं ज्ञानं सम्यग्ज्ञानं' वदन्त्यपि ।[५५]
'यथार्थानुभवो मानमनपेक्षतयेष्यते ।'[५६] ॥८०॥

यत् त्वप्यर्थक्रियायोग्योऽर्थक्रियां नाधिगच्छति
प्रतिबन्धात् प्रमाणं तदविसंवादवद् यदि ।[५७क] ॥८१॥

'पीतशङ्खादिबुद्धीनां विभ्रमेऽपि प्रमाणता ।
अर्थक्रियाविसंवादादपरे सम्प्रचक्षते ।'[५८ख] ॥८२॥

दृष्टोऽपि प्रतिपन्नोऽर्थो ऽधीतानभ्यस्तशास्त्रवत्
प्रमाणमेव, विज्ञानं तस्य चेन् निश्चयात्मकम् ।'[५९] ॥८३॥

प्रमायास् तु परोक्षाया अपरोक्षा गरीयसी ।
बाधाभावेऽपि चाद्यायां शङ्काशूलो न शाम्यति । ॥८४॥

विद्यानन्दो भणत्येवं **तत्त्वार्थश्लोकवार्तिके**
विवादानधरीकृत्य प्रमाविषयकान् ननु–
'तत्त्वार्थव्यवसायात्मं ज्ञानं मानमितीयता
'लक्षणेन गतार्थत्वाद् व्यर्थमन्यद् विशेषणम् ।
'गृहीतमगृहीतं वा स्वार्थं यदि व्यवस्यति,
'तन् न लोके न शास्त्रेषु विजहाति प्रमाणताम् ।'[६०] ॥८५-८७॥

प्रमा-(ऽ)प्रमा-विभागोऽयं व्यवहार-विकल्पितः ।
वस्तुतस् त्वप्रमा सर्वमित्याहुः सर्वशङ्किनः । ॥८८॥

व्यवहारा विलुप्यन्ते प्रमाया आग्रहान् ननु ।
अस्यज्ज्ञानस्य शक्यैव न प्रमात्वावधारणम् । ॥८९॥

कुमारिलो भणत्यत्र 'दोषाज्ञानात् प्रमाणता ।
'दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता ।'[६१] ॥९०॥

वेदान्तदेशिको **न्यायपरिशुद्ध्यां** भणत्यहो !
**तत्त्वचिन्तामणौ** गङ्गेशोपाध्यायस् तथैव च-- ॥६१॥

'न सर्वस्याप्रमाणत्वं, स्वपक्षस्य स्वतः क्षतेः ।
'न सर्वस्य प्रमाणत्वं, स्वपक्षस्यान्यतः क्षतेः । ॥

'प्रमाणेन प्रमाणस्य बाधः स्वव्याहतेः हतः ।
'अप्रमाणेन तद्बाधे साधनं च ततो न किम् ? ॥

'सर्वत्र संशयः तावन् न सर्वस्यापि दृश्यते ।
'सर्वं सन्दिग्धमिति ते निपुणस्यास्ति निश्चयः । ॥

'संशयश् च न सन्दिग्धः सन्दिग्धाद्वैतवादिनः ।
'दूरं गत्वाऽपि दुर्वारः संशये निर्णयस् तव ।'[६२] ॥६२-६५॥

'अहो ! बत ! महानेष प्रमादो धीमतामपि
'ज्ञानस्य व्यभिचारित्वे विश्वासः किन्निबन्धनः ?'[६३] ॥६६॥

'उत्प्रेक्षते हि यो मोहादजातमपि बाधकम्
'स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ।'[६४] ॥६७॥

## टिप्पण्यः

१. 'यत्र यदस्ति तत्र तस्यानुभवः प्रमा । तद्वति तत्प्रकारकानुभवो वा ।' गङ्गेशः, तत्त्वचिन्तामणिः, प्रत्यक्ष-खण्डः, पृ० ४००

२. पार्थसारथिमिश्रः, न्यायरत्नाकरः, चोदना-सूत्रम्, १७८; 'अन्या च स्मृतिरन्योऽनुभवः, प्रभाकरः, बृहती १. १. ५, पृ० १०३

३. **तैत्तिरीयारण्यकम्** १. २. १

४. **पदार्थधर्मसङ्ग्रहः** (सूक्ति-सेतु-व्योमवतीयुतं वाराणसी-संस्करणम्) पृ० ५५२

५. श्रीवल्लभः, **न्यायलीलावती**

६. लौगाक्षिभास्करः, **तर्ककौमुदी**, पृ० १०

७. श्रीधरः, न्यायकन्दली, पृ० ६२७

८. मानमनोहरा

९. न्यायमञ्जरी, प्रमाण-प्रकरणम्, पृ० २१

१०. 'तदारूढस्य वस्तुनस् तदानीमसत्त्वात् ।' तत्रैव

११. अन्नम्भट्टः, तर्कसङ्ग्रहः, पृ० २१-२२

१२. वेदान्त-परिभाषा, प्रमालक्षणप्रकरणे

१३. न्यायकन्दली, पृ० ६२७

१४. 'स्मृतिः प्रमा' । जयतीर्थः, प्रमाणपद्धतिः, पृ० ४; 'न ह्यस्ति प्रत्यक्षादिप्रामाण्यसाधकमन्यल् लोकव्यवहारात् ।' जयतीर्थः, न्यायसुधा २. १. २, पृ० २५१

१५. मेघनादारिः, नयद्युमणिः, दृश्यतामत्र दासगुप्तः, अ हिस्टरी ऑव इण्डियन फ़िलॉसोफ़ी, खण्ड ३, पृ० २१५

१६. पुरुषोत्तमः, प्रस्थानरत्नाकरः, पृ० २०

१७. तत्रैव, पृ० २४

१८. वेदान्तदेशिकः, न्यायपरिशुद्धिः, आह्निकम् १, प्रत्यक्षाध्यायः, पृ० २२

१९. तत्रैव, पृ० ३०३-३०५

२०. मीमांसाश्लोकवार्तिकम्, औत्पत्तिक-सूत्रम्, ११

२१. न्यायकुसुमाञ्जलिः ४.१

२२. न्यायकन्दली, पृ० ४१४

२३. जयतीर्थः न्यायसुधा २. १. २, पृ० २५०

२४. न्यायपरिशुद्धिः, पृ० २२

२५. नन्दीसूत्रम् २५, ४२, पृ० १६०, २६५

२६. उमास्वातिः, तत्त्वार्थाधिगमसूत्रम् सभाष्यम् ३२-३३

२७. नन्दीसूत्रम् २५, ४२, तु० विशेषावश्यकभाष्यम् ११५

२८. गीता १३. ११

२९. पुरुषोत्तमः, प्रस्थानरत्नाकरः, पृ० ५-६

३०. गीता १८. २०

३१. **प्रस्थानरत्नाकरः**, पृ० ७
३२. **गीता** १८.२१
३३. **प्रस्थानरत्नाकरः**, पृ० ७
३४. **गीता** १८. २२
३५. 'न विना प्रमाणेन प्रमेयस्योपलब्धिः ।' **मैत्र्युपनिषद्** ६.१४
३६. Cambridge History of India, खण्डः I, पृ० ४२१
३७. **महाभाष्यम्** २. १. ५४, पृ० ३६४
३८. तत्रैव १. १. १, पृ० २७
३९. पूज्यपादः, **सर्वार्थसिद्धिः** १. १०, पृ० ६९
४०. **योगसूत्रम्** १. ६
४१. देवसूरिः, **प्रमाणनयतत्त्वालोकालङ्कारः** ६. २४-२५; माणिक्यनन्दी, **परीक्षामुखसूत्रम्** ६.२
४२. 'तिविहे ववसाये पण्णत्ते । तं जहा—पच्चक्खे, पच्चइए, अणुगामिए [प्रत्यक्षं, प्रात्ययिकम्, आनुगमिकम्] ।' **स्थानाङ्गसूत्रम्** १८५, पत्रा १४०
४३. 'अहवा हेऊ चउव्विहे पण्णत्ते । तं जहा—पच्चक्खे, अणुमाणे, ओवम्मे, आगमे अ ।' तत्रैव ३३८, पत्रा २४१
४४. देवसूरिः, **प्रमाणनयतत्त्वालोकालङ्कारः** ६. २४-२५; माणिक्यनन्दी, **परीक्षामुखसूत्रम्** ६.२
४५. अकलङ्कः, **अष्टशती** ३६ : 'प्रमाणमविसंवादिज्ञानमनधिगतार्थाधिगमलक्षणत्वात् ।'
४६. सिद्धसेनदिवाकरः, **न्यायावतारः** १
४७. अकलङ्कः, **लघीयस्त्रयम्** ६०
४८. वात्स्यायनः, **न्यायभाष्यम्**
४९. 'अबाधितानधिगतासन्दिग्ध-बोधजनकत्वं हि प्रमाणत्वं प्रमाणानां, तच्च स्वत एवोपपादितम् ।' **भामती** १. १. ४, पृ० ६५; 'अबाधितानधिगतासन्दिग्ध-विज्ञानसाधनं प्रमाणमिति प्रमाणसामान्यलक्षणम् ।' तत्रैव २. १. १४, पृ० ३७६

५०. 'कारणदोष-बाधकज्ञान-रहितम्, अगृहीतग्राहि ज्ञानं प्रमाणम्' **शास्त्रदीपिका**, पृ० १२३; यथार्थमगृहीतग्राहि प्रमाणम्। तत्रैव, पृ० १२६

५१. **न्यायकन्दली**, पृ० ४१४

५२. **मीमांसाश्लोकवार्तिकम्**, चोदना-सूत्रम्, ८०, 'न विसंवादं' इति उंवेक-पठितम्।

५३. दिङ्नागः, **प्रमाणसमुच्चय-स्ववृत्तिः**, पृ० ११

५४. धर्मकीर्तिः, **प्रमाणवार्तिकम्** १.३, ५, ७

५५. धर्मोत्तरः, **न्यायबिन्दुटीका** १.१, पृ० ७

५६. **न्यायकुसुमाञ्जलिः** ४. १

५७. मनोरथनन्दी, **प्रमाणवार्तिकवृत्तिः**, १.३, पृ० ४

५८. **तत्त्वसङ्ग्रहः**, १३२३

५९. 'न केवलमप्रतिपन्न एवापूर्वार्थः, अपितु दृष्टोऽपि प्रतिपन्नोऽपि समारोपात् संशयादिसद्भावात् तादृगपूर्वार्था, अधीतानभ्यस्तशास्त्रवत्। एवं-विधार्थस्य यन् निश्चयात्मकं विज्ञानं तत् सकलं प्रमाणम्।' **प्रमेयकमलमार्तण्डः** १. १. ५, पृ० ५६

६०. विद्यानन्दः, **तत्त्वार्थश्लोकवार्तिकम्** १. १०. ७७-७८

६१. **मीमांसाश्लोकवार्तिकम्**, चोदना-सूत्रम्, ६०

६२. **न्यायपरिशुद्धिः**, पृ० २०-२१

६३. गङ्गेशोपाध्यायः, **तत्त्वचिन्तामणिः**, प्रत्यक्ष-खण्डः, पृ० ५०५

६४. कुमारिलः, **बृहट्टीका**, **ज्ञानश्रीमित्रनिबन्धावल्या** व्याप्तिचर्चायां १६५ तमे पृष्ठे उदाहृता, तु० 'नाशङ्का निष्प्रमाणिका', **मीमांसाश्लोकवार्तिकम्** चोदना-सूत्रम्, ६०

—०—

## VIII

### प्रमाणसङ्ख्या—कारिकाः

विप्रतिपत्तयो बह्व्यो मानसङ्ख्यानियामिकाः
सन्दृभ्याः प्रथमं तावन् मान-मेय-विचारणे। ॥१॥

कानि कानि प्रमाणानि कस्य कस्यानुसारतः
इति निर्णेतुकामोऽहं सन्दर्भेऽस्मिन् समासतः। ॥२॥

प्रमाणसङ्ग्रहो नैव सन्दृब्धः केनचित् क्वचित्
प्रमाणिषु व्यवस्थाप्य, यतेऽहं तं यथामति। ॥३॥

'प्रत्यक्षमेकं चार्वाकाः, कणाद-सुगतौ पुनः
'अनुमानं च तच् चाथ, साङ्ख्याः शब्दं च ते अपि,
'न्यायैकदेशिनोऽप्येवमुपमानं च केचन,
'अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः,
'अभावषष्ठान्येतानि भाट्टा वेदान्तिनस् तथा,
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः।'[१]– ॥४-६॥

इति प्रामाणिकाः प्रायः प्रमाणानि प्रचक्षते,
इतस्ततः समुद्धृत्य ग्रन्थेभ्यः कामचारतः ॥७॥

सुखबोधाय बालानां तेषां यत्नोऽवधार्यताम्,
सम्बोधाय वयस्थानां क्रियन्ते कारिका नवाः । ॥८॥

मीयते ज्ञायतेऽनेनेति प्रमाणं प्रचक्षते ।
यत् प्रमीयत एवागि प्रमाण-पदवीं व्रजेत् । ॥९॥

जयराशिरिति प्रख्यो लोकायत-महामतिः
मानमेयाद्यपह्नोतृ-**तत्त्वोपप्लवसिंहकृत्**,[2]
घोषयन्त इदं सर्वं शून्यं माध्यमिकास् तथा[3]
प्रमाणं नाभिमन्यन्ते परमार्थानुचिन्तने । ॥१०-११॥

सुन्दरपाण्ड्य आचार्यः शङ्करेणाप्युदाहृतः
प्रमाणव्यवहारं तु परमार्थे निषेधति—
'देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन सम्मतः,
'लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ।'[4] ॥१२-१३॥

लौकिकं वैदिकं चापि प्रमाणं व्यावहारिकम्
आत्माध्यासं पुरस्कृत्यानात्मनीत्याह शङ्करः ।[5] ॥१४॥

श्रीहर्षश्[6] चित्सुखाचार्यश् चान्येऽप्यद्वैतवादिनः
परमार्थे निषेधन्ति मानामानविकल्पनम् । ॥१५॥

'मानाधीना मेयसिद्धिर् मानसिद्धिश् च लक्षणात् ।
'तच् चाध्यक्षादिमानेषु गीर्वाणैरपि दुर्भणम् ।'[7] ॥१६॥

योगाचारैश् च सामान्यैर् निरालम्बनवादिभिः
ग्राह्यग्राहकवर्जित्वात् प्रमाणं नेष्टमेव हि । ॥१७॥

'अविभागोऽपि भूतात्मा विपर्यासितदर्शनैः
'ग्राह्यग्राहकसंवित्तभेदवानिव लक्ष्यते ।'[8] ॥१८॥

व्यवहारेऽन्यथा सर्वे तेऽपि नैयायिकादिवत्
अ[illegible]मुपगच्छन्ति [illegible] । ॥१९॥

सामान्यतस् तु मानस्य, प्रत्यक्षादेर् विशेषत:,
**न्यायसूत्रे**ऽक्षपादीये खण्डनं स्मर्यते भृशम् ।[९] ॥२०॥

आसन् महीतले केचित् प्रत्यक्षस्यापलापिन:,
कैयटेन महाभाष्यप्रदीपे द्योतितं यथा ।[१०] ॥२१॥

मानसङ्ख्या नियन्तव्या केनचिन् न महीतले
इति केचिच् च चार्वाका जयन्तोदाहृता: स्फुटम् ।[११] ॥२२॥

प्रत्यक्षं, दर्शनं, साक्षात्कारो, वाऽऽर्षं तु केवलम्
वेद एकं प्रमाणं स्याल् लौकिकं चाप्यलौकिकम् ॥ ॥२३।

श्रुतिश् चापि श्रुतर्षिभ्य: प्रमाणान्तरमिष्यते,
तत्त्वतस् तु भवेत् सर्वा सन्दृब्धार्षात्मिका श्रुति: । ॥२४॥

प्रत्यक्षत्वेन निर्दिष्टा **ब्रह्मसूत्र**-कृता श्रुति:—
उपरिष्टात् प्रवक्ष्याम: श्रुति-स्मृति-विचारणे । ॥२५॥

मानतामगमत् तर्कोऽप्युत्क्रान्तेष्वृषिषु क्रमात् ।
संविदागमतर्काश् च प्रमाणान्युदियुस् तत: । ॥२६॥

चार्वाका: केचिदिच्छन्ति प्रत्यक्षं मानमैन्द्रियम् ।
इतरेषां च मानानां मानं संमृद्यते तु तै: ।[१२] ॥२७॥

पुरन्दरस् तु चार्वाकोऽनुमानं लौकिकं ननु
मन्यते, ऽलौकिकं किन्तु तेनापि प्रतिषिध्यते ।[१३] ॥२८॥

**ब्रह्म-सूत्रे**,[१४] ऽस्य भाष्येषु,[१५] ब्रह्मकाण्डे तथैव च,
तर्काप्रतिष्ठयाऽश्रद्धाऽनुमाने दृश्यते भृशम् । ॥२९॥

'यत्नेनानुमितोऽप्यर्थ: कुशलैरनुमातृभि:
'अभियुक्ततरैरन्यैरन्यथैवोपपद्यते ।'[१६] ॥३०॥

एकमात्रं शिवज्ञानं प्रमाणं स्वीकृतं ननु
शैवसिद्धान्तिभि: प्रायो दाक्षिणात्यै: शिवार्चकै: । ॥३१॥

प्रमाणं परमं त्वेकं प्रत्यक्षाख्यात्मवेदनम्
अनुभूतिरपि ख्यातमिति वासिष्ठ-दर्शनम् । ॥३२॥

'सर्वप्रमाणसत्तानां पदमब्धिरपामिव
'प्रमाणमेकमेव स्यात् प्रत्यक्षं, तदतः शृणु—
'सर्वाक्षसारमध्यक्षं वेदनं विदुरुत्तमाः ।
'नूनं तत्प्रतिपत्तिसिद्धं तत् प्रत्यक्षमुदाहृतम् ।
'अनुभूतेर् वेदनस्य प्रतिपत्तेर् यथाविधम्
'प्रत्यक्षमिति नामेह कृतं, जीवः स एव नः ।'[१७] ॥३३-३५॥

कैश्चिन् माध्वैश् च कैश्चिच् च शाब्दिकैर् बहुमानतः
प्रत्यक्षं चापि शब्दश् च माने द्वे एव सम्मते । ॥३६॥

शास्त्रार्थजाऽनुभूतिश्, चागमः, प्रत्यक्षमप्युत
त्रीण्यप्येतानि मानानि मध्वाचार्यानुसारतः । ॥३७॥

'शास्त्रार्थयुक्तोऽनुभवः प्रमाण तूत्तमं मतम्,
'मध्यमं त्वागमो ज्ञेयः, प्रत्यक्षमधमं स्मृतम् ।'[१८] ॥३८॥

'ऋग्, यजुः, सामाथर्वा च, भारतं, पञ्चरात्रकम्,
'मूलरामायणं चैव शास्त्रमित्यभिधीयते ।
'यच् चानुकूलमेतस्य तच् च शास्त्रं प्रकीर्तितम् ।
'अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं, कुवर्त्म तत् ।'[१९] ॥३९-४०॥

नानुमानं निषेधन्ति ते यद्यपि समग्रतः,
मानता त्वनुमानस्य शब्दाधीनेति तैर् मतम् । ॥४१॥

कैश्चिन् माध्वैर् द्विधा भिन्नं प्रमाणं चान्यरीतितः—
तत् केवलप्रमाणं वाऽनुप्रमाणं तथैव च । ॥४२॥

यथार्थमेव यज् ज्ञानं तत् केवलमुदीरितम्,
ईश-लक्ष्मी-योग्ययोगि-ज्ञानभेदाच् चतुर्विधम् ।[२०] ॥४३॥

त्रीणि चानुप्रमाणानि—तेषु प्रत्यक्षमादिमम्,
द्वितीयमनुमानं च, मानमन्त्यं तथाऽऽगमः ।[२१] ॥४४॥

प्रत्यक्षं चानुमानं द्वे काणादैर् बहुभिर् मते ।
तयोरन्तर्भवन्त्यन्यप्रमाणानि च तन्मते ।[२२] ॥४५॥

दिङ्नाग-धर्मकीर्तिभ्यां द्वे माने कण्ठतो मते–
प्रत्यक्षं निर्विकल्पाख्यमनुमानं तथैव च । ॥४६॥

'प्रत्यक्षमनुमानं च प्रमाणं हि द्विलक्षणम् ।
'प्रमेयं तत्प्रयोगार्थं, न प्रमाणान्तरं भवेत् ।
'नापि पुनः प्रत्यभिज्ञाऽनवस्था स्यात् स्मृतादिवत् ।
'प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम् ।'[२३] ॥४७-४८॥

'मानं द्विविधं विषयद्वैविध्याच् छक्त्यशक्तितः ।'[२४]
इति धर्मकीर्ति-वाक्यं, तदन्यद्वचनं श्रृणु–
'न प्रत्यक्षपरोक्षाभ्यां मेयस्यान्यस्य संभवः ।
'तस्मात् प्रमेयद्वित्वेन प्रमाणद्वित्वमिष्यते ।
'प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यति
'प्रत्यात्मवेद्यः सर्वेषां, विकल्पो नामसंश्रयः ।'[२५] ॥४९-५१॥

स्वलक्षणपरं त्वाद्यं पारमार्थिकमेव च ।
सांवृतं चानुमानं स्यात् सामान्यलक्षणात्मकम् । ॥५२॥

'अर्थक्रियासमर्थं यत् तदत्र परमार्थसत् ।
'अन्यत् संवृतिसत् प्रोक्तं, ते स्व-सामान्य-लक्षणे ।'[२६] ॥५३॥

'स्वलक्षणे च प्रत्यक्षमविकल्पतया विना
'विकल्पेन न सामान्यग्रहस्, तस्मिंस् ततोऽनुमा ।'[२७] ॥५४॥

अपि बुद्धप्रमाणं तौ मन्येतेऽनेकहेतुभिः ।
बुद्धस्य ज्ञानवत्त्वाच् च हेयोपादेयवित्त्वतः,
कारुणिकत्वतश् चापि, शास्तृत्वात्, सुगतत्वतः,
तायित्वाच् चापि, संवादकत्वादपि विशेषतः ।[२८] ॥५५-५६॥

वसुबन्धुप्रणीतायां वादविध्यां,[२९] तथा पुनः
अज्ञातकर्तृके तर्कशास्त्रे[३०] च चरके क्वचित्[३१]
प्रत्यक्षं चानुमानं च प्रमाणे द्वे मते स्फुटम् ।
त एवारवणेनापि प्राग्दिङ्नागेन सम्मते ।[३२] ।।५७-५८।।

जिनागमे विभक्तानि ज्ञानानि पञ्चधा स्फुटम्,
तानि च प्रविभक्तानि स्युः प्रत्यक्ष-परोक्षयोः–
आभिनिबोधकज्ञानं, श्रुतज्ञानं तथैव च,
अवधिज्ञानमित्येवं मनःपर्यय-केवले ।[३३] ।।५९-६०।।

**राजप्रश्नीयसूत्रे** च[३४] **भगवत्यां** तथैव च,[३५]
ज्ञानपञ्चकतत्त्वस्य विभागः पञ्चधैव तु । ।।६१।।

द्विधा **स्थानाङ्गसूत्रे** च विभक्तं ज्ञानपञ्चकम्–
प्रत्यक्षं च परोक्षं च–**नन्दीसूत्रे**ऽपि तत् तथा ।[३६] ।।६२।।

परोक्षे द्वे मते ज्ञाने चाभिनिबोधक-श्रुते ।[३७]
प्रत्यक्षा ज्ञानभेदाः स्युर् वक्ष्यमाणास् त्रयोऽपि च । ।।६३।।

प्रत्यक्षं केवलज्ञानं, प्रत्यक्षमवधिस् तथा,
प्रत्यक्षं ज्ञानमेवास्ति मनःपर्याय इत्यपि । ।।६४।।

प्रविभागोऽयमेवेष्टो **नन्दीसूत्रे**ऽपि तत्त्वतः,
प्रत्यक्षं त्विन्द्रियं नोइन्द्रियं च द्विविधं स्मृतम् ।[३८] ।।६५।।

तानि नोइन्द्रियं ज्ञानं त्रीण्यप्युक्तानि चोपरि,[३९]
प्रत्यक्षं चेन्द्रियं पञ्च चाक्षुषादिकमेव च ।[४०] ।।६६।।

अकलङ्कप्रणीते च **लघीयस्त्रय**-पुस्तके,[४१]
जिनभद्रगणेर् भाष्ये **विशेषावश्यकाभिधे**
**सूत्रस्यावश्यकाख्यस्य** भाष्ये चापि समादृते
सांव्यवहारिकं प्रोक्तं प्रत्यक्षं ज्ञानमैन्द्रियम्–
'एगन्तेण परोक्खं लिंगियमोहाइयं च पच्चक्खं
'इन्दियमणोभवं जं तं संववहारपच्चक्खं ।'[४२] ।।६७-६९।।

**तत्त्वार्थाधिगमे सूत्रे** तूमास्वात्यभिसूत्रिते
मतिज्ञान-श्रुतज्ञाने परोक्षे परिकीर्तिते । ॥७०॥

केवलं, चावधिर् ज्ञाने, मनःपर्याय इत्यपि
तन्मतेऽतीन्द्रियज्ञानत्रयं प्रत्यक्षमेव च ।[८३] ॥७१॥

इतरेषां प्रमाणानां––अनुमानोपमानयोः,
अर्थापत्त्यागमादींश् च, सम्भवाभावयोरपि–
सजातीयैर् विजातीयैः स्वीकृतानां प्रमाणिभिः
अन्तर्भावः परोक्षे स्यादुमास्वातिविधानतः ।[८४] ॥७२-७३॥

प्रत्यक्षं लौकिकं, चान्यदनुमानं, तथाऽऽगमः,
प्रत्यभिज्ञा, स्मृतिश् सर्वं परोक्षं वेद तन्मते ।[८५] ॥७४॥

प्रायेणैतत्प्रकारेण वक्ष्यमाणप्रमाणिभिः
व्यवस्थाऽनभ्युपेतानां प्रमाणानां विकल्प्यते । ॥७५॥

तैर्थिकानां प्रमाणानि त्वपीष्टानि जिनागमे
वक्ष्यमाणप्रकारेण स्वतन्त्रं ज्ञानपञ्चकात् ॥७६॥

द्रव्यं, क्षेत्रं, तथा कालो, भावश् चापि तुरीयकः–
चतुर्विधानि मानानि **स्थानाङ्गसूत्रतः**, स्मर ।[८६] ॥७७॥

द्रव्यादीनां चतुर्णां च तैर्थिकानां तथैव च
मानानामन्वयो ज्ञानैः पञ्चभिश् चेष्टितः क्वचित् ।[८७] ॥७८॥

हिन्दुरीत्यैव लक्ष्येतेऽन्यैर् माने प्रायशो जिनैः
प्रत्यक्षप्रख्यमेवापि परोक्षप्रख्यमेव च । ॥७९॥

प्रत्यभिज्ञा प्रमाणं स्यात् परोक्षं जैन-दर्शने ।
प्रत्यभिज्ञैकदेश्येवोपमानमपि तन्मते । ॥८०॥

निर्विकल्पविशेषः साऽद्वैते प्रत्यक्षमेव च ।
न्याय-वैशेषिके पूर्वमीमांसा-दर्शनेऽपि च
सविकल्पकप्रत्यक्षविशेषः सा समन्ततः ।
प्रत्यक्षस्मृति-संयोग-मानं सा बौद्ध-दर्शने । ॥८१-८२॥

प्रत्यभिज्ञा, ऽनुमानं च, स्मृतिस्, तर्कस्, तथागमः–
माणिक्यनन्दिना पञ्च परोक्षाणीत्युदीरितम् ।[८८] ॥८३॥

इदमत्र विशेषो यद्, यथा पूर्वमुदीरितम्,
प्रत्यभिज्ञाविशेषस् तूपमानं तन्मते ननु । ॥८४॥

**न्यायावतारसूत्रेषु** सिद्धसेनदिवाकरः
विभाजयति मानानि च प्रत्यक्ष-परोक्षयोः । ॥८५॥

'प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।
'प्रत्यक्षं च परोक्षं च द्विधा, मेयविनिश्चयात् ।'[८९] ॥८६॥

तत्र चायं विशेषोऽस्ति शान्त्याचार्यादिलक्षितः—
परोक्षं द्विविधं भिन्नं तेन शब्दानुमानयोः ।[९०] ॥८७॥

रामावतारशर्माख्यो ऽधुनातन-महामतिः
स्वमतं दर्शयत्येवं स्व-**परमार्थदर्शने**–
द्विविधोऽधिगमो ज्ञेयो ज्ञानं विज्ञानमित्यपि ।
स्वरूपावगतिर् ज्ञानं बाह्यार्थातमं तथेतरत् । ॥८८-८९॥

सर्वात्मेशोपलम्भात्मं ज्ञानं मानं परात् परम् ।
प्रमाणं तत् प्रमाणानां विज्ञानोद्भाविनां तथा । ॥९०॥

'द्रष्टुर् बहिर् यो विषयोपलम्भो विज्ञानमेतद् विदिति जनानाम् ।
'ज्ञानं तु सर्वात्मन ईश्वरस्य स्वस्मिन् स्वरूपस्य किलोपलब्धिः ।'[९१]
॥९१॥

त्रीण्येवात्र प्रमाणानि तद्विधानि च, तद् यथा--
प्रत्यक्षं, चानुमानं च, तथाऽऽप्ताज्ञाऽपि लौकिकी ।[९२] ॥९२॥

श्रुतिः, स्मृतिस्, तथाऽऽचारो **ब्रह्मसूत्रे** धृता भृशम् ।[९३]
प्रत्यक्षं तु श्रुतिर् ज्ञेया ऽनुमानं च स्मृतिस् तथा ।[९४] ॥९३॥

**महाभारत** एवैतन् मतं मानत्रयं क्वचित्--
'वेदः प्रत्यक्षम्, आचारः' इति ध्येयं विचक्षणैः ।[९५] ॥९४॥

भासर्वज्ञश् च,[५६] रासालदासो,[५७] व्योमशिवस्[५८] तथा,
साङ्ख्या:,[५९] पातञ्जला,[६०] मध्वो,[६१] नैम्बार्काश्,[६२] चरकः क्वचित्,[६३]
असङ्ग-प्रमुखबौद्धा योगाचारैकदेशिन:,[६४]
जिनभद्रगणिर् भाष्ये विशेषावश्यकाभिधे,[६५]
**देवीभागवतं** चापि,[६६] **लक्ष्मीतन्त्रं**[६७] तथैव च,
**चिद्विलासे** च सम्पूर्णानन्द आधुनिको बुधः,[६८]
केचिदन्ये ऽपि विद्वांसः प्राक्तना नूतना अपि
प्रत्यक्षं, चानुमानं च, शब्दं मानत्रयं विदुः। ॥९५-९८॥
'दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्
'त्रिविधं प्रमाणमिष्टं, प्रमेयसिद्धिः प्रमाणाद् धि।''[६९] ॥९९॥
'त्रीण्येव हि प्रमाणानि पठितानि सुपण्डितैः–
'प्रत्यक्षं चानुमानं च, शाब्दं चैव तृतीयकम्।'[७०] ॥ ००॥
'प्रमाणत्रयसम्बोध्यं, भावाभावस्वलक्षणम्,
'चराचरमणु, स्थूलं, चेतनाचेतनं जगत्।'[७१] ॥१०१॥
प्रत्यक्षमनुमानं च मूलमाने ऽवधारिते,
आगमाख्यं प्रमाणं तत्प्रतिष्ठं, **व्यासभाष्यतः**। ॥१०२॥
दृष्टो वाऽनुमितो योऽर्थो मूलवक्त्रोपदिश्यते
तदर्थविषया वृत्तिः श्रोतुरागम इष्यते। ॥१०३॥
ईदृङ् निर्विप्लवो, ऽन्यस् तु प्लवते सर्व आगमः।[७२] ॥१०४॥
नागमत्वेन मान्या ऽतः श्रुतिर् लोकानुवादिनी।[७३] ॥
**देवीभागवते** किन्तु प्रमाणानीतराण्यपि
पठितान्यविरोधेन, तान्यपि ज्ञायतां बुधैः–
'चत्वार्येवेतरे प्राहुरुपमानयुतानि च,
'अर्थापत्तियुतान्यन्ये पञ्चप्राहुर् महाधियः।
'सप्तपौराणिकाश् चैव प्रवदन्ति मनीषिणः।
'एतैः प्रमाणैर् दुर्ज्ञेयं यद् ब्रह्म परमं च तत्।
'वितर्कश् चात्र कर्तव्यो बुद्ध्या चैवागमेन च।
'निश्चयात्मिकया युक्त्या विचार्य च पुनः पुनः।

'प्रत्यक्षतस् तु विज्ञानचिन्त्यं मतिमतां सदा
'दृष्टान्तेनापि सततं शिष्टमार्गानुसारिणः ।[७४] ॥१०५-१०९॥

उक्तं मानत्रयं रामानुजश् **श्रीभाष्य** उक्तवान् ।
प्रत्यक्षं वैष्णवानां तु केवलं सविकल्पकम् ।[७५] ॥११०॥

'ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः'
इति रामानुजः स्वीये **गीताभाष्ये** समुक्तवान् ।[७६] ॥१११॥

प्रत्यक्षगतमेवास्ति प्रमाणं योगसम्भवम्–
इतीच्छति विनिश्चेतुं **श्रीभाष्ये** च स एव हि ।[७७] ॥११२॥

'प्रत्यक्षादि-त्रयं च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्थी'–
त्येको रामानुजीयो भणति निजकृतौ **तत्त्वमुक्ताकलापे** ।[७८] ॥११३॥

वेकङ्टनाथ एवैष मतिः षोढा ऽपि मन्यते
विभाज्यतेऽन्यथा मानं तेनैवापि त्रिधा पुनः–
'त्रिविधोऽनुभवश् चैव तन्मूला च तथा स्मृतिः
'इति षोढा विभागे तु न विमन्यामहे वयम् ।
'अनुभूतिविभागेन तन्मूलायाः स्मृतेरपि
'विभागस्य गतार्थत्वादैकराश्यमुदाहृतम् ।
'अतो हि तस्यास् तन्मूलेष्वन्तर्भावविवक्षया
'प्रमाणवर्गं त्रित्वेन प्राञ्चः केचिद् विवञ्चते ।'[७९] ॥११४-११७॥

चातुर्विध्यं प्रमाणस्य वेङ्कटेनेष्टमेव च–
प्रत्यक्षं, चानुमानं, चागमः, स्मृतिरथापि च ।[८०] ॥११८॥

तन्मते किन्तु नैतिह्यं प्रमाण-पदवीं व्रजेत् ।[८१]
विशेषतोऽवधेयं स्याद् वेङ्कटनाथ-दर्शनम् । ॥११९॥

येऽपि स्युर् लकुलीशीयाः ख्याताः पाशुपता भुवि
चित्रप्रस्थानका येऽपि शैवधर्मानुयायिनः,
लौकिके व्यवहारे तैरपि मानत्रयं मतम्–
प्रत्यक्षं चानुमानं च शब्दश् चागमसंज्ञितः ।[८२] ॥१२०-१२१॥

त्रीण्येतानि प्रमाणानि कालिदासो महाकविः
समुदाहरते स्पष्टं, किन्त्वियत्ताग्रहं विना–
'प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर् महिमा तव
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ?'[83] ॥१२२-१२३॥

प्रत्यक्षं मानमेकं च, बुद्धिरित्यपरं तथा,
तृतीयं प्रतिभानं च राधाकृष्णन्-मतेन तु ।[84] ॥१२४॥

क्वचित् स्थानाङ्गसूत्रे च,[85] चरकेऽपि क्वचित् तथा,[86]
अनेकान्तपताकायां हरिभद्रकृतेऽपि च,[87]
हरिभद्रस्य **चालोके** **प्रज्ञापारमितो**परि,[88]
मैत्रेयस्यापि **मध्यान्तविभागे** कारिकामये,[89]
वसुबन्धोश् च **तद्भाष्ये**, कोश-भाष्येऽपितस्य च,[90]
स्थिरमतिप्रणीते **तट्टीकायां** कण्ठतः पुनः,[91]
अपि च **त्रिंशिकाभाष्ये** स्थिरमति-कृते तथा,[92]
**लङ्कावतारसूत्रे**ऽपि प्रमाणत्रितयं मतम् ।[93] ॥१२५-१२८॥

आपस्तम्ब-कृते धर्मसूत्रे,[94] मीमांसयोस् तथा,[95]
**मनुस्मृतावपि** मानत्रयमेतत् किलेष्यते । ॥१२९॥

'प्रत्यक्षं, चानुमानं च, शास्त्रं च विविधागमम्,
'त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ।'[96] ॥१३०॥

तथाऽभिनवगुप्तोऽपि मानान्येतानि त्रीण्यपि
प्रत्यभिज्ञामयान्येव मन्वते सुविचक्षणः[97] ॥१३१॥

श्रुतियुक्त्यनुभूत्याख्यं प्रमाणत्रितयं ननु
अभ्युपगच्छति प्रायो विद्यारण्यो महामुनिः ।[98] ॥१३२॥

**तत्त्वदर्शन**-कृज्-ज्वालाप्रसादोऽद्यतनः सुधीः
प्रत्यक्षं, चानुभूतिं च, तर्कं मानानि मन्यते ॥१३३॥

प्रत्यक्षं, चानुमानं च, तथैतिह्यं, स्मृतिस् तथा–
**आरण्यके तैत्तिरीये** मतं मानचतुष्टयम् – ॥१३४॥

'स्मृतिः, प्रत्यक्षमैतिह्यमनुमानचतुष्टयम् -
'एतैरादित्यमण्डलं सर्वैरेव विधास्यते ।'[९९] ॥१३५॥

'आगमादनुमानाच् च प्रत्यक्षादुपपत्तितः'—
चत्वार्येतानि मानानि वायूक्तानि विशेषतः ।[१००] ॥१३६॥

'दृष्टं, चैवानुमेयं च, तर्कं वक्ष्यामि युक्तितः'—
इत्यप्युक्तं क्वचित् तेन मानानामिव वर्णने ।[१०१] ॥१३७॥

प्रत्यक्षं, चानुमानं च, शब्दो, युक्तिस् तथैव च—
चत्वार्येतानि मानानि मतानि चरके क्वचित् ।[१०२] ॥१३८॥

प्रत्यक्षं, चानुमानं च, तथैतिह्यं, तथाऽऽगमः—
**रामायणे** प्रसिद्धे च मतं मानचतुष्टयम्—
'ऐतिह्यमनुमानं च, प्रत्यक्षमपि, चागमम्
'ये हि सम्यक् परीक्षन्ते कुतस् तेषामबुद्धिता ?'[१०३] ॥१३९-१४०॥

'श्रुतिः, प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्'—
**श्रीमद्भागवते** चापि मतं मानचतुष्टयम् ।[१०४] ॥१४१॥

'प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा
'आद्यन्तवदसज् ज्ञात्वा निःसङ्गो विचरेदिह ।'[१०५] ॥१४२॥

प्रत्यक्षं, लैङ्गिक चापि, स्मृतिश्, चार्ष तथैव च—
विद्या चतुर्विधा प्रोक्ता **पदार्थधर्मसङ्ग्रहे** ।[१०६] ॥१४३॥

लौकिकं मानमेकत्र **कन्दल्यां** स्मृतिरुच्यते ।[१०७]
मानत्वाच् च्याविताऽन्यत्र कन्दल्यामेव सुस्फुटम् ।[१०८] ॥१४४॥

**न्यायलीलावती**[१०९]-**तर्ककौमुद्यौ**[११०] स्मृति-मानके ।
क्वचित् क्वचित् तथाऽन्यत्रापि स्मृतिर् मानमुच्यते । ॥१४५॥

प्रत्यक्षं, लैङ्गिकं चापि, तृतीयं मानमागमः
इति कणाद-सूत्रेषु,[१११] परिशेषोऽपि वा पुनः ।[११२] ॥१४६॥

पृथगुल्लिखितं तत्र यदार्षं सिद्धदर्शनम्[113]
तत् प्रमाणविशेषो वा विद्याभेदोऽथवा पुनः। ॥१४७॥

आगमोऽप्युपमानं च, चेष्टाऽर्थापत्तिरप्युत,
सम्भवोऽभाव, ऐतिह्यमनुमान्तर्गतानि तु।[114] ॥१४८॥

प्रत्यक्षं लौकिकं, चार्षं, प्रतिभा षड्विधा तथा,
अदृष्टमागमो, ऽभ्यासो, युक्तिः शास्त्राविरोधिनी
तर्काख्या चानुमानाख्या श्रुतिस्मृत्यविरोधिनी—
प्रमाणत्वेन गृह्यन्ते प्रायो **वाक्यपदीयतः**।[115] ॥१४९-१५०॥

क्वचित् **स्थानाङ्गसूत्रे**,[116] **चानुयोगद्वार** एव च,[117]
तथा **भगवतीसूत्रे**,[118] सुश्रुते,[119] चरके क्वचित्,[120] ॥१५०॥

नागार्जुन-कृतौ या **विग्रहव्यावर्तनीति** ह[121]
तस्यां, मध्यमके वृत्तौ चन्द्रकीर्तेरपीति ह,[122]
व्याख्यायां पिङ्गलस्यापि, सूत्रे माध्यमिकेऽपि च,[123]
**उपायहृदये** चापि,[124] तथा माहेश्वरैरपि,[125]
कात्यायनकृतायां च वार्तिके शब्दशासने,[126]
पातञ्जले **महाभाष्ये** शब्दशासनवारिधौ,[127]
नैयायिकैश् च सामान्यैरपवादान् विहाय च,[128]
प्रत्यक्षं, चानुमानं, चोपमानं, चागमो मताः। ॥१५१।१५४॥

'प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि
'परीक्ष्याः' सर्व एवेति भीष्मोक्तिः शान्तिपर्वणि[129] ॥१५५॥

अपि देवप्रसादाच् च ज्ञानं प्राप्नोति पूरुषः
इति भीष्मो भणत्यग्रे पूरयन् मानपञ्चकम्।[130] ॥१५६॥

शब्द एव प्रमाणं स्याच् छुद्धाद्वैत-नये ननु।
सर्वथा ब्रह्मविज्ञाने, ऽलौकिकज्ञापकस् तु यः।[131] ॥१५७॥

चतुष्टयं प्रमाणं स्याच् छब्दाख्यं चापि तन्नये।
यथाऽऽह वल्लभाचार्यः शुद्धाद्वैतप्रवर्तकः–
'वेदाः, श्रीकृष्णवाक्यानि, व्याससूत्राणि चैव हि,
'समाधिभाषा व्यासस्य–प्रमाणं तच् चतुष्टयम्।[१३२] ॥१५८-१५९॥

चकारात् पूर्वमीमांसाशास्त्रं व्यासाविरोधि च।
परोक्तिं वर्जयित्वा च लौकिकोक्तिं तथैव च।[१३३] ॥१६०॥

**भागवतं** प्रमाणं स्याद् यत् समाधिफलं महत्।[१३४]
तदेकवाक्यतापन्नं प्रेमाजनकमित्यहो! ॥१६१॥

मानमेकं च शब्दाख्यं व्यासतो यच् चतुष्टयम्।[१३५]
वैशिष्ट्यं वल्लभस्यैतन् मानामानविचारणे। ॥१६२॥

'उत्तरं पूर्वसन्देहवारकं परिकीर्तितम्
'अविरुद्धं तु यत् त्वस्य प्रमाणं तच् च, नान्यथा।[१३६] ॥१६३॥

'अथवा सर्वरूपत्वाल् नामलीलाविभेदतः
'विरुद्धांशपरित्यागात् प्रमाणं सर्वमेव हि।'[१३७] ॥१६४॥

पुरुषोत्तम-मते किन्तु प्रमाणं पृथगेव तु
अर्थापत्तिरिति ख्यातं यथाऽद्वैतनये ननु।[१३८] ॥१६५॥

नयवादान्तरेणैव गृहीतानि जिनागमे
सर्वाण्येतानि मानानि हीति तत्त्वार्थभाष्यकृत्।[१३९] ॥१६६॥

वरदविष्णुमिश्रेण विशिष्टाद्वैतवादिना
स्वीये **प्रज्ञापरित्राण**-नामके तत्त्वसङ्ग्रहे
स्वयंसिद्धं तथा दिव्यं पृथङ् मानेऽवधारिते
रामानुजाभ्युपेतानि प्रमाणान्यतिरिच्य तु।[१४०] ॥१६७-१६८॥

प्रत्यक्षं, चानुमानं च, शब्दो, ऽर्थापत्तिरित्यपि
चत्वार्येतानि मानानि शैवानां पौष्करागमे[१४०क] ॥१६९॥

प्रत्यक्षं, चानुमानं, चोपमानं, शब्द इत्यपि
अर्थापत्तिश् च मानानि पञ्च प्राभाकराणि च ।[१४१] ॥१७०॥

इदमत्र विशेषो यत् प्राभाकर-मते ननु
प्रमाणं शास्त्र-शब्दः स्यान्, नैवाप्तवचनं क्वचित् ॥१७१॥

मेघनादारि-मुख्याश् ये स्यू रामानुजीयकाः
पञ्चैतानि प्रमाणानि तेऽङ्गीकुर्वन्ति सर्वशः ।[१४२] ॥१७२॥

क्वचिन् नैयायिकेष्टानि,[१४३] क्वचित् प्राभाकराणि च,[१४४]
मानानि शङ्कराचार्यो व्यवहारेऽभिमन्यते । ॥१७३॥

बोधायनाभिधो, ऽन्यो वा, वृत्तिकृज् जैमिनेरपि,[१४५]
भाष्यकृच् छबरोऽस्यैव,[१४६] वार्तिककृत् कुमारिलः,[१४७]
धर्मराजाध्वरीन्द्रादि-शाङ्कराश् च प्रमाणिनः,[१४८]
तथा स्कन्दपुराणीया शैवानां **सूतसंहिता**—
प्रत्यक्षं, चानुमानं, चोपमानं, शब्द इत्यपि,
अर्थापत्तिमभावं च मानानि स्थापयन्ति षट् । ॥१७४-१७६॥

'प्रमाणज्ञानसामग्र्यः षण् मयाऽभिहिता बुधाः !
'तत्रैकाऽभावविज्ञानसामग्री कथिता द्विजाः !
'अन्या तु भावविज्ञानसामग्री परिकीर्तिता
'यद् योग्यानुपलब्ध्यैव जन्यं विज्ञानमास्तिकाः !
'तत् स्यादभावविज्ञानं धार्मिका ! वेदवित्तमाः !
'इन्द्रियोत्पन्नविज्ञानं प्रत्यक्षं परिभाषितम्,
'व्याप्तिजन्यपरिज्ञानमनुमानमितीष्यते ।
'सादृश्यहेतुजं ज्ञानमुपमानामुदाहृतम्,
'अर्थापत्तिरिति प्रोक्तं विप्रा ! अनुपपत्तिजम् ।
'तात्पर्योपितशब्दोत्थज्ञानं शाब्दमुदाहृतम् ।'[१४९] ॥१७७-१८१॥

व्यतिरेक्यनुमानं तु नेष्टमद्वैतिभाट्टयोः
स्थापयन्ति च तत्स्थाने तेऽर्थापत्तिं समन्ततः । ॥१८२॥

शब्दस् तु द्विविधो ज्ञेयो वैदिको लौकिकस् तथा ।
अपौरुषेय आद्यः स्यात्, पौरुषेयश् च लौकिकः ।[१५०] ॥१८३॥

आद्यस्यैव प्रमाणत्वं शबरेण मतं स्फुटम् ।
तथा प्रभाकरेणापि प्रतिवार्य तु लौकिकम् ।[१५१] ॥१८४॥

वेद एव भवेच् छब्द-प्रमाणं गुरु-सम्मतम्
अनुमानगताऽऽप्ताज्ञा लौकिकीयाऽस्ति तन्मते ।[१५२] ॥१८५॥

**भाट्टचिन्तामणौ** गागाभट्टेनेष्टानि तानि षट्,
तानि तु लौकिकान्येव प्रोक्तानि तेन सर्वथा । ॥१८६॥

अलौकिकानि मानानि चैकत्रिंशद् भणत्यसौ ।
तानि––धर्मप्रमाणानि षड्, धर्मभेदकानि षट्,
धर्माङ्गताबोधकानि षट्, क्रमबोधकानि षट्,
अतिदेशप्रमाणानि त्रीण्येवाङ्गीकरोत्यसौ,
एकमूहप्रमाणं च स्थानापत्त्यात्मकं ननु,
त्रीणि बाधप्रमाणानीत्येकत्रिंशत् समेत्य च ।[१५३] ॥१८७-१८६॥

अर्थापत्त्युपमाने च, सम्भवोऽभाव एव च,
प्रतिभाऽपि, तथैतिह्यं–'षट् प्रमाणानि जैमिनिः'–
इत्युक्तिर् गौडपादस्य **स्वभाष्ये साङ्ख्यसप्ततेः**,[१५४]
मीमांसाकारतो भिन्नो जैमिनिः स प्रतीयते । ॥१६०-१६१॥

प्रमाणद्वयवादीव मीमांसा-कृत् तु भात्यहो !
जैमिनिर् येन प्रत्यक्षशब्दावेकत्र सूत्रितौ ।[१५५] ॥१६२॥

या **साङ्ख्यकारिका**-टीका विख्याता **जयमङ्गला**
प्रमाणषट्कमेतच् च तस्यामप्यस्त्युदाहृतम्–
'प्रतिभौपम्यमैतिह्यमभावः सम्भवस् तथा,
'अर्थापत्तिरितीमानि प्रमाणान्यपरे जगुः ।'[१५६] ॥१६३-१६४॥

साभावमानषट्कं यत् तद्, ऐतिह्यं च, सम्भवः–
इति मानाष्टकं चेष्टं **कृतकोट्याख्यपुस्तके** ।[१५७] ॥१६५॥

पैराणिकैरपि ग्राह्यं प्रायो मानाष्टकं हि तत् ।[१५८]
मानाष्टकं तदेवेष्टं दयानन्देन चाधुना ।[१५९] ॥१९६॥

दयानन्द-मते पञ्चप्रकारं स्यात् परीक्षणम्
ज्ञानस्य विषयस्यापि वक्ष्यमाणं समासतः– ॥१९७॥

गुण-कर्म-स्वभावानामीश्वरस्यानुकूलता
वेदानुकूलता चापि प्रथमं सत्यलक्षणम् । ॥१९८॥

सृष्टिक्रमानुकूल्यं च द्वितीयम् सत्यलक्षणम् ।
आप्तवाक्यानुकूल्यं च तृतीयं सत्यलक्षणम् । ॥१९९॥

चतुर्थं लक्षणं तत् स्याद् यदात्मौपम्यदर्शनम् ।
प्रमाणाष्टकसिद्धं च पञ्चमं सत्यलक्षणम्[१६०] ॥२००॥

गण्यन्ते परिशेषोऽपि स्वभावलिङ्गमप्यथ
कैश्चित् पौराणिकैस्, तेषां मानान्येतानि वै दश ।[१६१] ॥२०१॥

दशैवैतानि मानानि वेदव्यासधृतानि च
तन् मणिमेखलै-नाम-तमिलग्रन्थ इङ्गितम् ।[१६२] ॥२०२॥

मीमांसका अपीच्छन्ति परिशेषं क्वचित् क्वचित् ।[१६३]
चेष्टापि तान्त्रिकैश् चैव प्रमाणत्वेन गृह्यते ।[१६४] ॥२०३॥

मानं स्वतन्त्रमिच्छन्ति केचिन् निर्णयमप्युत ।[१६५]
केचिच् छकुनमप्यन्ये, ऽन्ये लिप्यादिकमप्यहो ![१६६] ॥२०४॥

लोकप्रामाण्यवादाभं शासनं दृश्यते ऽपि च
शास्त्रेषु शास्त्रमर्यादासीमकं सुस्फुटं, यथा—
'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ,
'धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ।'[१६७]
'सर्वलोकविरुद्धं च धर्ममप्याचरेन् न तु ।'[१६८]
लोकधर्माः प्रमाणं वा य आम्नायाविरोधिनः ।[१६९] ॥२०५-२०७॥

'तर्कोऽप्रतिष्ठः, श्रुतयो विभिन्ना, नैको ऋषिर् यस्य मतं न भिन्नम्।
'धर्मस्य तत्त्वं निहितं गुहायां, महाजनो येन गतः स पन्थाः ।'[१७०]
॥२०८॥

**वार्तिके** च **महाभाष्ये** लोक-मानं बहु श्रितम् ।[१७१]
धर्मशास्त्रे शब्दशास्त्रे चातो बहुमतं हि तत् । ॥२०९॥

लोकप्रामाण्यवादस् तु शङ्करेणापलापितः
प्रत्यक्षादिप्रमाणेभ्योऽतिरिक्तं तन् न तन्मते ॥[१७२] ॥२१०॥

चरके त्वाग्रहो नास्ति मानसङ्ख्यापरः क्वचित् ।
पूर्वोक्त-तत्प्रमाणेभ्योऽपीतराणां तदुक्तितः । ॥२११॥

प्रत्यक्षं, चानुमानं, चैतिह्यमौपम्यमप्युत,
'अर्थापत्त्यर्थका चार्थप्राप्तिः सम्भव इत्यपि ।'[१७३] ॥२१२॥

यत् प्रत्यक्षाद्यभावान्त-मानषट्कं च मन्वते
भाट्टा, अद्वैतिनो, ऽप्यन्यैस् तदिष्टं व्यवहारतः—
न्याय-काणाद-मीमांसा-साङ्ख्यैर् लोकायतैस् तथा,
अपि बौद्धैर्—यथा प्रोक्तं वै मणिमेखलै-कृता ।[१७४] ॥२१३-२१४॥

अपि चात्र विशेषो यद् बौद्ध-लोकायते ननु
विख्यातेऽवैदिके त्वत्र वैदिके सम्प्रधारिते ।[१७५] ॥२१५॥

प्रत्यक्षस्य बलीयस्त्वं नैयायिक-नये ननु
अनुमानबलीयस्त्वं प्राभाकर नये तथा ।[१७६] ॥२१६॥

अन्यान्यपि च मानानि केचिदिच्छन्ति मानिनः ।
कृतोऽस्माभिः प्रमाणानां ख्यातानामत्र सङ्ग्रहः । ॥२१७॥

अयमत्र विशेषो यद् येऽपि शब्दापलापकाः
स्वशास्त्रेष्वेकनिष्ठत्वात् तेऽपि शब्दप्रमाणकाः । ॥२१८॥

स्वतन्त्रचिन्तनाभ्यासाच् छास्त्राभ्यासपरिष्कृतात्
संवित्प्रमाणतावादं रोचतेऽस्माकमीदृशम्–[१७]
स्व-संवित्, पर-संविच् च, तर्कस् तन्मूलकस् तथा–
प्रमाणत्रितयं ज्ञेयम्; स्व-संवित् तु स्वतः प्रमा । ॥२१९-२२१॥

सा संविदक्षजा चापि, प्रातिभा, स्मृतिजा तथा,
त्रि-प्रत्यनीकभूताऽन्त्याऽनुपलब्धिरिति स्मृता । ॥२२२॥

## टिप्पण्यः

१. वरदराजः, **तार्किकरक्षा**, प्रथमः परिच्छेदः, श्लोकाः ७–१०

२. 'सल्लक्षणनिवन्धनं मानव्यवस्थानं, मानंनिवन्धना च मेयस्थितिः, तदभावे तयोः सद्व्यवहारविषयत्वं कथं स्वयमेव [प्रतिपद्य]ताम् ?' जयराशिभट्टः, **तत्त्वोपप्लवसिंहः**, पृ० १ (मूले त्रुटितः 'प्रतिपद्यताम्' इति शब्दस् त्वस्मत्पूरितः ।)

३. 'यदि कश्चिन् निश्चयो नामास्माकं स्यात्, स प्रमाणजो वा स्यादप्रमाणजो वा । न त्वस्ति । यदा चैवं निश्चयस्याभावस्, तदा कस्य प्रसिद्ध्यर्थं प्रमाणानि कल्पयिष्यामः ? कुतो वैषां सङ्ख्या, लक्षणं, विषयो वा भविष्यति ?' चन्द्रकीर्तिः, **मध्यमकशास्त्रवृत्तिः**, १.३, पृ० १९

४. माधवाचार्यः, **सूतसंहिता-तात्पर्यदीपिका**, मुक्तिखण्डः ४.१३

५. 'तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाण-प्रमेय-व्यवहारा लौकिका वैदिकाश् च प्रवृत्ताः । सर्वाणि च शास्त्राणि विधि-निषेध-मोक्षपराणि, कथं पुनरविद्यावद्-विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ? उच्यते देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति, न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः सम्भवति, न चानध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते, न चैतस्मिन् सर्वस्मिन् नसति अङ्गस्यात्मनः प्रमातृत्वमुत्पद्यते, न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव

प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च ।' **शङ्करः, शारीरकभाष्यम्,** उपोद्घातः ।

६. 'तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर् वाग्विस्तराणां प्रतीयमानत्वात् ···। सोऽयमपूर्वः प्रमाणादिसत्तानभ्युपगमात्मा वाक्स्तम्भनमन्त्रः ·। श्रीहर्षः, **खण्डनखण्डखाद्यम्,** प्रथमः परिच्छेदः

७. चित्सुखः, **तत्त्वप्रदीपिका** २.१८

८. धर्मकीर्तिः, प्रमाणवार्तिकम् २.३५४, अपि दृश्यतां **मध्यान्तविभागसूत्रं, तद्भाष्यं, तट्टीका** च १.२.६, १४; **विज्ञप्तिमात्रता-त्रिंशिका** १६, २६; **महायानसूत्रालङ्कारः** ११.३२

९. **न्यायसूत्रम्** २.१.८-६९

१०. 'प्रत्यक्षापलापिनं प्रति प्रत्यक्षपूर्वकानुमानासम्भवात् सामान्यतोदृष्टमनुमानमुपन्यस्यते—ओषधिवनस्पतीनामिति ।' कैयटः, **महाभाष्यप्रदीपः** ५.११.११९.५

११. अशक्य एव प्रमाणसङ्ख्यानियम इति सुशिक्षितचार्वाकाः ।' जयन्तभट्टः, **न्यायमञ्जरी**, प्रमाण-प्रकरणम्, पृ० ३३; 'चार्वाकधूर्तस् तु···प्रमाण-प्रमेय-सङ्ख्या-लक्षण-नियमाशक्यकरणीयत्वमेव तत्त्वं व्याख्यातवान् ·। तत्रैव, पृ० ५९

१२. माधव-विद्यारण्यः, **सर्वदर्शनसङ्ग्रहः**, चार्वाकदर्शनम्

१३. 'पुरन्दरस् त्वाह—लोकप्रसिद्धमनुमानं चार्वाकैरपि इष्यत एव, यत् तु कैश्चिल् लौकिकं मार्गमतिक्रम्यानुमानमुच्यते तन् निषिध्यत इति ।' कमलशीलः, **तत्त्वसङ्ग्रह-पञ्जिका**, कारिके १४८२-१४८३

१४. 'तर्काप्रतिष्ठानात् ।' **ब्रह्मसूत्रम्** २.१.११

१५ शारीरकादिभाष्याणि २.१.११

१६. भर्तृहरिः, **वाक्यपदीयम्**, ब्रह्मकाण्डम् ३४; शान्तरक्षितः, **तत्त्वसङ्ग्रहः** १४६२

१७. **योगवासिष्ठः** २.१९.१६-१८

१८. **ब्रह्मसूत्रम्, मध्वभाष्यम्** २.१.१७

१९. तत्रैव १.१.३

२०. 'प्रमाणं द्विविधम्—केवलप्रमाणमनुप्रमाणं चेति।…तत्र यथार्थज्ञानं केवलप्रमाणम्। ··केवलप्रमाणं चतुर्विधम्—ईश्वर-ज्ञानं, लक्ष्मी-ज्ञानं, योगि-ज्ञानं, अयोगि-ज्ञानं चेति।' श्रीमच्छलारि-शेषाचार्य-विरचिता **प्रमाणचन्द्रिका**, पृ० १३५

२१. 'अनुप्रमाणं त्रिविधम्—प्रत्यक्षमनुमानमागमश् चेति।' तत्रैव, पृ० १३८

२२. **वैशेषिकसूत्रम्** ३.१.१३; ९.१३, १५, १८, १९

२३ दिङ्नागः, **प्रमाणसमुच्चयः** (मैसूरु सं०) २-३

२४. तत्रैव १

२५. तत्रैव ६३, १२३; 'द्विविधं सम्यग्ज्ञानं—प्रत्यक्षमनुमानं च। तत्र कल्पनापोढमभ्रान्तं प्रत्यक्षम्।' धर्मकीर्तिः, **न्यायबिन्दुः** १.२-४

२६. धर्मकीर्तिः, **प्रमाणवार्तिकम्**, प्रत्यक्ष-परिच्छेदः ३; 'तस्य विषयः स्वलक्षणम्। तदेव परमार्थसत्। अन्यत् सामान्यलक्षणम्।' धर्मकीर्तिः, **न्यायबिन्दुः** १.१२, १४, १६

२७. दिङ्नागः, **प्रमाणसमुच्चयः**, प्रत्यक्ष-परिच्छेदः ७५

२८. **प्रमाणसमुच्चयः** १; **प्रमाणवार्तिकम्** १.३१-३६, १३४, १४१-१४४, १४७-१४८, २८५-२८६

२९. जी. टुची, **प्री-दिङ्नाग बुद्धिस्ट टेक्स्ट्स ऑन लॉजिक**, बड़ौदा १९२९, भूमिका, पृ० १७

३०. **तर्कशास्त्रम्**, तस्मिन् नेव सङ्ग्रहे, पृ० ४-५

३१. 'तस्माद् द्विविधा परीक्षा ज्ञानवताम्—प्रत्यक्षमनुमानं चेति। त्रिविधा वा सहोपदेशेन।' **चरक-संहिता**, विमान-स्थानम् ४, ८; 'द्विविधा खलु परीक्षा [प्रमाणमित्यर्थः] ज्ञानवताम्—प्रत्यक्षमनुमानं च। एतद्धि द्वयमुपदेशश् च परीक्षा स्यात्। एवमेषा द्विविधा परीक्षा, त्रिविधा वा सहोपदेशेन।' तत्रैव, ८.८३

३२. एस० कृष्णस्वामी आयंगरः, **मणिमेखलै इन इट्स हिस्टॉरिकल सेटिंग**

(लन्दनः ल्यूज़ाक ऐंड कम्पनी, १९२८), पृ० २०५. अरवणस्य पूर्णनाम 'अरवण अडिगळ' इति वदन्ति ।

३३. **नन्दीसूत्रम्** (सातारा, १९४२)

३४. **राजप्रश्नीयसूत्रम्** १६५

३५. **भगवतीसूत्रम्** ८८.२.३१७

३६. **नन्दीसूत्रम्** २

३७. तत्रैव २४; **स्थानाङ्गसूत्रम्** ७१

३८. **नन्दीसूत्रम्** ३

३९. तत्रैव ५

४०. तत्रैव ४

४१. अकलङ्कः, **लघीयस्त्रय-स्वोपज्ञवृत्तिः**, अकलङ्कग्रन्थत्रयम् (अहमदवाद-कलकत्ता, १९३९) १.४, पृ० २—'तत्र सांव्यवहारिकम् इन्द्रियानिन्द्रियप्रत्यक्षम् ।'

४२. **विशेषावश्यक-भाष्यम्** ९५

४३. उमास्वातिः, **तत्त्वार्थाधिगमसूत्रम्**, स्वोपज्ञभाष्यसहितम् १.९-१२

४४. तत्रैव १.१२

४५. तत्रैव १.१०-१३

४६. 'चउव्विहे पमाणे पण्णत्ते । तं जहा—दव्वप्पमाणे, खेत्तप्पमाणे, कालप्पमाणे, भावप्पमाणे ।' **स्थानाङ्गसूत्रम्** २५८

४७. **अनुयोगद्वारसूत्रम्** ५९

४८. 'तत् [प्रमाणं] द्वेधा । प्रत्यक्षेतरभेदात् ।' माणिक्यनन्दी, **परीक्षामुख-सूत्रम्** (प्रमेयकमलमार्तण्डसहितम्) (मुम्बई, १९४१), २.१-२; परोक्षमितरत् । प्रत्यक्षादिनिमित्तं स्मृति-प्रत्यभिज्ञान-तर्कानुमानागम-भेदम् ।' तत्रैव ३.१-२. 'परोक्षप्रमाणविशेषस् तर्को ज्ञानव्यापारः ।' अकलङ्कः, **लघीयस्त्रयम्** ३.२; 'उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञान-समूहः' । हेमचन्द्रः, **प्रमाणमीमांसा** २.२.५; अत्रोहस् तर्को, यथाऽन्यत्रापि ।' १.२.११

४९. सिद्धसेनदिवाकरः, **न्यायावतारसूत्रम्** (न्यायावतारवार्तिक-वृत्ति-सहितम्) (मुम्बई, १९४९) १

५०. तत्रैव २, ५, ८

५१. 'विज्ञानमदः [अदः = प्रमाणत्रयम्] । ज्ञानं सर्वात्मोपलम्भः, तत् प्रमाणं प्रमाणानाम् ।' रामावतारशर्मा, **परमार्थदर्शनम्** १.१.३४-३५. तत्र तस्य स्वोपज्ञवार्तिकमुदाहृतमुपरि ।

५२. 'परमार्थः प्रत्यक्षानुमानाभ्यामबाधिताभ्यामाप्ताज्ञया च निर्णीतार्थया । तानि त्रीणि प्रमाणानि प्रसिद्धानि ।' तत्रैव १.१.३, ६

५३. **ब्र० सू०** १.३.२८; ३.२.२४; ३.३.३; ३.४.३, ४३; ४.४.२०

५४. तत्रैव १.३.२८; ३.२.२४; ४.४.२० 'प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात् ।' **शारीरकभाष्यम्**

५५. **महाभारतम्**, अनुशासन-पर्व १६२.१८

५६. 'तत् त्रिविधं प्रमाणम्—प्रत्यक्षानुमानमागमश् चेति ।' भासर्वज्ञः, **न्यायसारः** (कलकत्ता, १९१०), पृ० २

५७. राखालदासो वन्द्योपाध्यायः, **तत्त्वसारः** (वाराणसी, १९३०) २१

५८. **व्योमवती** (वाराणसी, १९२४-३१), पृ० ५३८-५८७; 'व्योमशिवस् तु प्रत्यक्षानुमानशब्दानि त्रीणि प्रमाणानि प्रोचिवान् ।' गुणरत्नः, **तर्करहस्यदीपिका** (कलकत्ता, १९०५), पृ० २८१-२८२. तुल० प्रत्यक्षानुमानागमः प्रमाणमिति वैशेषिकाः ।' **प्रमाणमीमांसा**, पृ० ७

५९. टि० ६९ (अधस्तात्) द्रष्टव्यम् । 'त्रिविधं प्रमाणं ।' **तत्त्वसमाससूत्रम्** २१; **सांख्यप्रवचनसूत्रम्** १.८७

६०. 'प्रत्यक्षानुमानागमाः प्रमाणानि ।' **योगसूत्रम्**, समाधिपादः ७

६१. दृश्यतामत्र टि० १८ (उपरि)

६२. माधवमुकुन्दः, **परपक्षगिरिवज्रः** (हार्दसञ्चयापरनाम)

६३. दृश्यतामत्र टि० ३१ (उपरि)

६४. टुची, भूमिका, पृ० १७

६५. **विशेषावश्यकभाष्यम्** १६६६

६६. **देवीभागवतम्** ८.२३

६७. **लक्ष्मीतन्त्रम्** ८.६

६८ सम्पूर्णानन्दः, **चिद्विलासः** (वाराणसी, २००१ वि०), पृ० २१

६९. ईश्वरकृष्णः, **सांख्यकारिका**, पृ० २१

७०. दृश्यतामत्र टि० ६६ (उपरि)

७१. दृश्यतामत्र टि० ६७ (उपरि)

७२. **व्यासभाष्यम्** १.७

७३. **शारीरकभाष्यम्**

७४. **देवीभागवतम्** १.८.२४-२७

७५. 'प्रत्यक्षानुमानागमाख्यं प्रमाणजातम् ।' **श्रीभाष्यम्** १.१.१

७६. **गीताभाष्यम्** १५.१५

७७. 'किं तर्हि तत्र [ब्रह्मणः शास्त्रयोनित्वे] प्रमाणम् ? न तावत् प्रत्यक्षम् । तद् धि द्विविधम्—इन्द्रियसम्भवं योगसम्भवं चेति ।' **श्रीभाष्यम्** १.१.३

७८. वेङ्कटनाथः **तत्त्वमुक्ताकलापः** ४.३१

७९. वेङ्कटनाथः, **न्यायपरिशुद्धिः** (वाराणसी, १९१८-२३), पृ० ४९६

८०. 'प्रमाणचातुर्विध्यात् तदाभासा अपि चतुर्विधाः, प्रत्यक्षानुमानागमस्मृत्याभासभेदात् । तत्रैव, पृ० १६३

८१. वेङ्कटनाथः, **मीमांसापादुका**, पृ० २४१

८२. 'प्रत्यक्षानुमानाप्तवचनानीति प्रमाणान्यभिधीयन्ते । एष्वेवोपमानार्थापत्तिसम्भवाभावैतिह्यप्रतिभादीनां व्याख्यायमानानामन्तर्भावः । एवमेतानि त्रीणि प्रमाणानि ।' कौण्डिन्यः **पाशुपतसूत्र-पञ्चार्थभाष्यम्** १, पृ० ७

८३. कालिदासः, **रघुवंशम्** १०.२८

८४. **सर्वेपल्ली राधाकृष्णन्, ऐन आइडियलिस्ट व्यू ऑव लाइफ़,** पृ० १३४ : 'इट [=नॉलेज् इज़ प्रोडूयूस्ड इन थ्री वेज ह्विच आर सेन्स-एक्सपीरिएंस, डिस्कर्सिव रीज़निंग ऐंड इन्टयूटिव अप्रिहेन्शन ।'

८५. 'तिविहे ववसाए पण्णत्ते । तं जहा— पच्चक्खे, पच्चइए, अणुगामिए ।' (प्रत्यक्षं, प्रात्ययिकः, आनुगामिकम्) **स्थानांगसूत्रम्** १८५, पत्रा १४०

८६. 'त्रिविधं खलु रोगविशेषविज्ञानं भवति । तद् यथा—आप्तोपदेशः प्रत्यक्षमनुमानं चेति । तत्राप्तोदेशो नामाप्तवचनम् । प्रत्यक्षं तु खलु तद् यत् स्वयमिन्द्रियैर् मनसा चोपलभ्यते । अनुमानं खल्वपि तर्को युक्त्यपेक्षः ।' **चरकसंहिता**, विमानस्थानम् ४.३.७

८७. हरिभद्रसूरिः, **अनेकान्तजयपताका** (बड़ौदा, १९४७), पृ० २१५; तट्टीका, पृ० १४२

८८. 'प्रत्यक्षानुमानागमप्रमाणैः० ।' हरिभद्रः, **अभिसमयालङ्कारालोकः** (दर्भंगा, १९६०), प्रथमः परिवर्तः, पृ० २८९, ३१३; 'प्रत्यक्षानुमानागमार्थानामधिगमात्'० । कल्याणमित्रपरिवर्तः द्वाविंशः, पृ० ५०४; प्रत्यक्षेण स्वरूपपरिच्छेदः प्रमाणम्, अनुमानेन विविक्तताबोधः क्षयः, आगमेन उभाभ्यां वा इयत्तावधारणं पर्यन्तः ।' अष्टाविंशः परिवर्तः, पृ० ५२०

८९. 'लोकप्रसिद्धमेकस्मात् त्रयाद् युक्तिप्रसिद्धिकम्
विशुद्धगोचरं द्वेधा एकस्मादेव कीर्तितम् ॥ ॥
मैत्रेयनाथः **मध्यान्तविभागकारिका** ३.१२

९०. 'प्रमाणत्रयं निश्चित्य', **मध्यान्तविभागभाष्यम्** ३.१२; 'प्रत्यक्षमनुमानमाप्तागयो वा ।' **अभिधर्मकोशभाष्यम्** २.४५, पृ० २५७

९१. 'प्रमाणत्रयं पुनः प्रत्यक्षमनुमानमागमश् च ।' **मध्यान्तविभागभाष्यटीका** ३.१२

९२. 'युक्तिर् योगः । स पुनराप्तोपदेशो, ऽनुमानं, प्रत्यक्षं च । स पुनः श्रुतमयश्, चिन्तामयो, भावनामयश् च । तत्राप्तवचनप्रामाण्याद् योऽवबोधः स श्रुतमयः, युक्तिनिध्यानजश् चिन्तामयः, समाधिजो भावनामयः ।' स्थिरमतिः, **त्रिंशिका-भाष्यम्** १०

९३. **लङ्कावतारसूत्राणि**, पृ० ३९

९४. 'नानुमानेन भैक्षमुपदिष्टं दृष्टश्रुताभ्यां तु ।' **आपस्तम्ब-धर्मसूत्रम्** १.१.२७

९५. **दण्यतामल मणिमेखलै इन इट्स हिस्टॉरिकल सेटिंग**, पृ० ८६-८७

९६. **मनुस्मृतिः** १२.१०५

९७. 'प्रत्यक्षानुमानागमाद्यन्यतममानप्रत्यभिज्ञावलेन…।' **अभिनवगुप्तः, ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी,** III, पृ० २

९८. विद्यारण्यः, **पञ्चदशी**, चित्रदीपप्रकरणम् ५६

९९. **तैत्तिरीयारण्यकम्** १.२.१

१००. **वायुपुराणम्**, पूर्वभागः ५३.१२२

१०१. तत्रैव, उत्तरभागः ४१.१०

१०२. 'प्रत्यक्षं ह्यल्पम्, अनल्पमप्रत्यक्षमस्ति यदागमानुमानयुक्तिभिरुपलभ्यन्ते।' **चरक-संहिता**, सूत्रस्थानम् १.१.७; द्विविधमेव खलु सर्वं, सच् चासच् च। तस्य चतुर्विधा परीक्षा—आप्तोपदेशः, प्रत्यक्षमनुमानं, युक्तिश् चेति।' तत्रैव ११.१७; एवं प्रमाणैश् चतुर्भिरुपदिष्टै०।' तत्रैव ११.३२

१०३. **रामायणम्**, गोरेसियो संस्करणम्/गौडसंस्करणम् ५.८७.२३

१०४. **श्रीमद्भागवतम्** ११.१९.१७

१०५. तत्रैव ११.२८.९

१०६. **पदार्थधर्मसङ्ग्रहः**, सूक्ति-सेतु-व्योमवतीयुतः, पृ० ५५२

१०७. श्रीधरः, **न्यायकन्दली**, प्रथमं सं०, पृ० १८६

१०८. तत्रैव, पृ० २५७

१०९. श्रीवल्लभः, **न्यायलीलावती** (मुम्बई), पृ० ६७—'स्मृतिरपि मानान्तरमेव।'

११०. लौगाक्षिभास्करः, **तर्ककौमुदी**, पृ० ६

१११. **वैशेषिकसूत्रम्** ३.१.१३; ९.१३-१७-१९; १.१.३; २.१.१७-१९; ३.२.८; १०.४-५, १९, २१

११२. तत्रैव २.१.२७ (उपस्कारयुतम्)

११३. तत्रैव ९.३८

११४. **पदार्थधर्मसङ्ग्रहः**, पृ० ५०६-५०७

११५. भर्तृहरि, **वाक्यपदीयम्**, ब्रह्मकाण्डम् ३७.४०; २.१४१ (प्रत्यक्षम्); २.१४२-१५४ (प्रतिभा), ३०, ४१, ४३, १४६ (आगमः), १३७; २.१४३ (युक्तिः), ३५ (अभ्यासः), ३६ (अदृष्टम्)

११६. 'अहवा हेऊ चउव्विहे पण्णत्ते । तं जहा—पच्चक्खे, अणुमाणे, ओवम्मे, आगमे' । **स्थानाङ्गसूत्रम्**, सूत्र ३३८, पत्रा २४१

११७. **अनुयोगद्वारसूत्रम्** १४७

११८. 'से किं तं पमाणं ? पमाणे चउव्विहे पण्णत्ते । तं जहा—पच्चक्खे, अणुमाणे, ओवम्मे, आगमे जहा अणुयोगद्दारे तहा णेयव्वं पमाणं ।' भगवतीसूत्रम् ५.३.१९१, १९२

११९. 'तस्याङ्गवरमाद्यं प्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमानमुपधारय ।' **सुश्रुत-संहिता**, सूत्रस्थानम् १.१६

१२०. 'अथ हेतुः । हेतुर् नामोपलब्धिकारणम्, तत् प्रत्यक्षमनुमानमौपम्यमिति । एभिर् हेतुभिर् यदुपलभ्यते तत् तत्त्वम् ।' **चरक-संहिता**, विमानस्थानम् ८.३३; अनुमानं नाम तर्को युक्त्यपेक्षः ।···ऐतिह्यं नाम आप्तोपदेशो वेदादिः ।' तत्रैव ८.३६-४२; 'शब्दो नाम वर्णसमाम्नायः । स च चतुर्बिधः—दृष्टार्थश्, चादृष्टार्थश् च, सत्यश् च, अनृतश् चेति ।' तत्रैव ८.३८ (किन्त्वेवं लक्षितः शब्दो नास्ति प्रमाणत्वेन गृहीतः कैश्चिदपि वादिभिः) ।

१२१. नागार्जुनः, **विग्रहव्यावर्तनी** ५-६

१२२. चन्द्रकीर्तिः, **मध्यमकसूत्रवृत्तिः** (१९१३), पृ० ७४-७५

१२३. एच. उई, **वैशेषिक फ़िलासोफ़ी अकार्डिंग टु दशपदार्थशास्त्र** (१९१७), पृ० ८६

१२४. 'अर्थस्थापनमिच्छता चतुर्विधं ज्ञानमाश्रयितव्यम् । किं तच् चतुर्विधम् ? प्रत्यक्षमनुमानमुपमानमागमश् च ।' **उपायहृदयम्** (टुची), पृ० ६; चतुर्विधं प्रमाणम्—प्रत्यक्षमनुमानमुपमानमागमश् चेति ।' तत्रैव, पृ० १३. कस्यचित् दिङ्नागपूर्वतार्किकस्य हीनयानिनः कृतिरियम् ।

१२५. **सर्वदर्शनसङ्ग्रहस्याभ्यङ्करलिखितोपोद्घातः**

१२६. **कात्यायन-वार्तिकम्, समहाभाष्यम्** ४.३.१०४.१-२; १.४.१०८.७;

१२७. **महाभाष्यम्**—'शब्दप्रमाणका वयम्। यच् छब्द आह तदस्माकं प्रमाणम्।' १.१.१; २.१.१; 'सूक्ष्मो हि भावोऽनुमितेन गम्यः। भवति वै प्रत्यक्षादनुमानबलीयस्त्वम्।' ३.२.१२३, १२४; 'उपमानात् सिद्धम्' ४.१.३३; ३.१.७.१५; २.१.५४; इत्यादि

१२८. 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि', **न्यायसूत्रम्** १.१.३

१२९. **महाभारतम्**, शान्तिपर्व ५६.४१; तु० २१८.१७

१३०. तत्रैव ३३४.५-६

१३१. 'वेदा इति। शब्द एव प्रमाणम्, तत्राप्यलौकिकज्ञापकमेव।' वल्लभः, **तत्त्वार्थदीपनिबन्धः** (शास्त्रार्थप्रकरणम्) ७, पृ० २६ (वाराणसी, १९७१)

१३२. तत्रैव

१३३. 'चकाराज् जैमिनिसूत्राणि च। एवकारेण व्याससूत्राविरोधेनैव तदङ्गीकरणम्।' तत्रैव, पृ० २७

१३४. 'एतच् चतुष्टयमेकवाक्यतापन्नं प्रमाजनकमित्यर्थः।' तत्रैव, पृ० २८

१३५. 'व्यासस्य समाधिभाषा भागवतम्। तत्रापि यन् न लौकिकरीत्या वदति ··नापि परमतरीत्या ··। यावत् समाधौ स्वयमनुभूय निरूपितं सा समाधिभाषा।' तत्रैव, पृ० २८

१३६. तत्रैव ८

१३७. तत्रैव ९

१३८. पुरुषोत्तमः **प्रस्थानरत्नाकरः**, पृ० १४९-१५०

१३९. **तत्त्वार्थभाष्यम्** १.६, १२

१४०. वरदविष्णुमिश्रः, **प्रज्ञापरित्राणम्**

१४०क. दृश्यतामत्र, सुरेन्द्रनाथ दासगुप्त, **हिस्टरी ऑव इण्डियन फ़िलासोफ़ी**, V, पृ० ३७

१४१. प्रभाकरः, **बृहती** (मद्रास, १९३४), पृ० २०५-२०७

१४२. मेघनादारिसूरिः, **नयद्युमणिः**, पृ० १८६—'तच्च प्रमाणं पञ्चविधम्—प्रत्यक्षमनुमानमुपमानं शास्त्रार्थमर्थापत्तिरिति ।'

१४३. 'प्रत्यक्षानुमानोपमानागमः सर्वतो याथात्म्येनावधार्य०'। शङ्करः, **मुण्डकोपनिषद्भाष्यम्** १.२.१२

१४४. 'प्रत्यक्षं ··, अनुमानं ··, उपमानं , अर्थापत्तिः · , शब्दः · ।' शङ्करः, **बृहदारण्यकोपनिषद्भाष्यम्** ३.३.१

१४५. शबरः, **मीमांसाभाष्यम्, बृहती-संस्करणम्** १.१.५

१४६. तत्रैव

१४७. कुमारिलभट्टः, **मीमांसाश्लोकवार्तिकम्**, १.१.५, अभाव-परिच्छेदः १, ५७; अर्थापत्ति-परिच्छेदः १

१४८. तानि प्रमाणानि षट्—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात् ।' धर्मराजाध्वरीन्द्रः, **वेदान्तपरिभाषा**

१४९. **सूतसंहिता** ४.१०.१३-१८

१५०. 'शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम् ।' **मीमांसासूत्रम्**, भाष्यं, **बृहती**, पृ० १०५

१५१. **बृहती**, तत्रैव; **प्रकरणपञ्चिका** (का० हि० वि०), पृ० २४२ (— 'न शास्त्रव्यतिरिक्तं शाब्दमस्ति)

१५२. 'ननु तर्हि यत्र वक्तृज्ञानस्यान्यतोऽनवगतस्यावगमकं पौरुषेयं वाक्यं तत्रैव शाब्दं प्रमाणमस्तु; न, तत्रानुमानत्वात् । **प्रकरणपञ्चिका**, पृ० २४४

१५३. गागाभट्टः, **भाट्टचिन्तामणिः**, तर्कपादः, पृ० ११

१५४. 'षट् प्रमाणानि जैमिनिः । अथ कानि तानि प्रमाणानि ? ''अर्थापत्तिः, सम्भवो, ऽभावः, प्रतिभैतिह्यमनुमानं च'' इति षट् प्रमाणानि ।' गौडपादः, **साङ्ख्यकारिका-भाष्यम्** ४. तुलनीयम्—**मणिमेखलै इन इट्स हिस्टॉरिकल सेटिंग**, पृ० १८९

१५५. **मीमांसासूत्रम्** १.१.४

१५६. **सांख्यकारिका-जयमङ्गलाटीका** ४, पृ० ६६

१५७. **मणिमेखलै इन इट्स हिस्टॉरिकल सेटिंग,** पृ० ५८, १८६. कृतकोटिस् तु० पूर्वोत्तरमीमांसासूत्रयोराद्या व्याख्या बोधायनकृतेति कथ्यते, बोधायनश् चैव शबरादिभिर् वृत्तिकार इत्यभिधीयते। दृश्यतामत्र **मणिमेखलै०**, पृ० ५७-६७, ८६-६२

१५८. भीमाचार्यझलकीकरः, **न्यायकोशः**, पृ० ५५६; **न्या० सू०** २.२.१; **मत्स्यपुराणम्** ४.४

१५९. दयानन्दस्वामी, **सत्यार्थप्रकाशः**, तृतीयः समुल्लासः; **ऋग्वेदादिभाष्य-भूमिका** (२००८ वि०), पृ० ११६

१६०. **सत्यार्थप्रकाशः**, पृ० ८०-८१

१६१. **न्यायकोशः**, पृ० ५५६

१६२. **मणिमेखलै०**, पृ० ५७-५८, १८६-१९०

१६३. यशवन्तवासुदेव अठल्ये, **तर्कसंग्रह ऑव अन्नंभट्ट**, पृ० ३४६

१६४. वरदराजः, **तार्किकरक्षा** ८-११; **पदार्थधर्मसङ्ग्रहः**, पृ० १०९; **व्योमवती**, पृ० ५८७. तु० 'इहेङ्गितेन, चेष्टितेन, महता वा सूत्रप्रबन्धेनाचार्याणामयमभिप्रायो गम्यते।' **महाभाष्यम्** ६.१.३७. चेष्टानुमानं तु प्रभाकरेणोल्लिखितम्। द्रष्टव्यमत्र **बृहती**, पृ० २४७

१६५. **व्योमवती**, पृ० ६१६; **पदार्थधर्मसङ्ग्रहः**, पृ० ६१६

१६६. **न्यायकोशः**, पृ० ५५६

१६७. **मनुस्मृतिः**, ४.१७६

१६८. **कूर्मपुराणम्** २.५३

१६९. 'देश-जाति-कुलधर्माश् चाम्नायैरविरुद्धाः प्रमाणम्।' **गौतम-धर्मसूत्रम** ११. २०. तु० **बौधायनधर्मसूत्रम्** १.२.१-६

१७०. **महाभारतम्**, वनपर्व ३१३.१७

१७१. 'लोकतः', **कात्यायन-वार्तिकम्** १.१.१, पृ० ५०; 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः।' तत्रैव; 'यदि तर्हि लोक एषु प्रमाणम्, किं शास्त्रेण क्रियते?' **महाभाष्यम्** १.१.१, पृ० ५० 'लोकतः शिष्टलोकात्', **प्रदीपः** ४.१.३

१७२. 'न हि तावल् लोको नाम किञ्चित् स्वतन्त्रं प्रमाणमस्ति ।' शारीरकभाष्यम् १.३.३२. तु० 'लोका निर्विचाराः सामान्याः ।' तर्करहस्यदीपिका, पृ० ३००

१७३. चरकसंहिता, विमानस्थानम् ८.३६-४२,४८,४६

१७४. मणिमेखलै०, पृ० १६२ —'ऑल द सिक्स रिकॉग्नाइज द सिक्स प्रमाणाज़ "ऐट द प्रेज़ेन्ट टाइम" ।'

१७५. तत्रैव, पृ० ६७, १९२

१७६. बृहती १.१.१३, पृ० २८०

१७७. 'संविदेव भगवती वस्तूपगमे नः शरणम् ।' न्यायवार्तिकतात्पर्यटीका २.१.३६, पृ० ३११



## IX

श्रुतिप्रमाणको धर्मो--वैदिकानां मतं स्फुटम् ।
श्रुतिः का ? जटिलः प्रश्नः श्रुतिसञ्ज्ञार्थमार्गणः । ॥१॥

'श्रुतिस्तु वेदो विज्ञेय' इति वाक्यं मनुस्मृतेः ।[१]
दृष्टत्वाद् वेदमन्त्राणां वेदो दृष्टिर् न तु श्रुतिः । ॥२॥

श्रुतर्षिभिः श्रुतत्वाच् चेद् वेदः श्रुतिरितीर्यते,
ऋषिभिः पूर्वदृष्टत्वाद् दृष्टिरित्युच्यते न किम् ? ॥३॥

धर्मशास्त्रं स्मृतिर् ज्ञेयमित्याख्याऽपि मनुस्मृतेः ।[२]
स्मृतिर् नृणां परोक्षार्था, परोक्षार्थोऽत्र दिश्यताम् । ॥४॥

अतः शास्त्रप्रवादो यत् स्मृतिः सर्वा स्मृतिः श्रुतेः
श्रुतेरस्मर्यमाणत्वान् न भवेत् पारमार्थिकः । ॥५॥

लोकाचारव्यवस्थायै स्मृतिः क्लृप्ता प्रतीयते ।
तद्वेदनिरपेक्षांशा अपि श्रौताः प्रकल्पिताः । ॥६॥

कस्याश्चित् तत्स्मृतेर् मूलं चेद् वेदेषु न दृश्यते,
तन्मूलं लुप्तशाखादौ--मीमांसाया विनिर्णयः ।[३] ॥७॥

श्रुतिश् च द्विविधा प्रोक्ता-वैदिकी तान्त्रिकी तथा ।[४]
वस्तुतः श्रुतयोऽसङ्ख्याः श्रुत्यनेकान्तवादतः । ॥८॥

वेदशाखाप्रभेदास् तु पुराऽभूवन् सहस्रशः ।[५]
त्रिशाधिकसहस्रस्य गणनाऽप्यद्य लभ्यते ।[६] ॥९॥

ब्राह्मणारण्यकादीनि मुक्तिकोपनिषत्तया
तत्सङ्ख्याका भवन्त्येकैकशोऽपि प्रतिसंहितम् ।[७] ॥१०॥

श्रुतेर् भागस् तु वैदिक्याः प्रथमो मन्त्रसंहिता ।
द्वितीयो ब्राह्मणं सानुब्राह्मणं[८] च विशेषतः । ॥११॥

आरण्यकं तृतीयस् तद् रहस्यमपि कीर्त्यते ।
निषच्[९] चोपनिषच् चापि तुरीयो भाग उच्यते । ॥१२॥

पञ्चमः कल्प इत्याहुः सानुकल्पादिकस्[१०] तथा ।
अनुशाखा प्रसङ्गोऽपि पुराणेषु क्वचित् क्वचित् ।[११] ॥१३॥

तान्यनुब्राह्मणादीनि चानुशाखाङ्गमीक्ष्यताम्
अनुशाखाङ्गमाभाति योऽनुकल्पोऽभिधीयते । ॥१४॥

एवमेवोपवेदोऽपि श्रूयते स्मर्यतेऽपि च ।[१२]
संहितात्मोत विद्यात्मा ? संहिताऽस्य न वर्तते । ॥१५॥

संहितास् तूपलभ्यन्ते वेदस्य द्वादशैव च ।
अस्मास्वेव चतस्रः स्युश् चतुर्वेदत्वतो धृतः । ॥१६॥

सङ्ख्या तु ब्राह्मणादीनि लब्धानां सम्प्रतीति ह ।
पूर्वोक्तवेदभागानां शतांशोऽपि न लभ्यते । ॥१७॥

पुरा निमित्तशाखाऽऽसीत् काचिद् बुद्धप्रशंसिनी
श्रीशान्तरक्षितेनासौ चर्चिता **तत्त्वसङ्ग्रहे** । ॥१८॥

'किंतु वेदप्रमाणत्वं यदि युष्माभिरिष्यते,
'तत् किं भगवतो मूढैः सर्वज्ञत्वं न गम्यते ?
'निमित्तनाम्नि सर्वज्ञो भगवान् मुनिसत्तमः
'शाखान्तरे हि विस्पष्टं पठ्यते ब्राह्मणैर् बुधैः ।

'येऽसौ षड्दन्तमात्मानमवदातद्विपात्मकम्
'स्वप्ने प्रदर्श्य सञ्जातो बोधिसत्त्वो गुणोदधिः
'विघुष्टशब्दः सर्वज्ञः कृपात्मा स भविष्यति
'प्राप्तामृतपदः शुद्धः सर्वलोकपिताऽपि च।
'अथ शाखान्तरं नेदं वेदान्तर्गतमिष्यते,
'तदत्र न निमित्तं वो द्वेषं मुक्त्वाऽवधार्यते।
'स्वरादयश् च ते धर्माः प्रसिद्धाः श्रुतिभाविनः
'कर्तुमत्रापि शक्यास् ते नरेच्छामात्रसम्भवात्।'[१३] ॥१९-२४॥

तथा तुरुष्कशाखाऽपि याजुष्यासीन् महीतले,
यथाऽवगम्यते सम्यक् **प्रपञ्चहृदयात्** पुनः।[१४] ॥२५॥

द्विस् तुरुष्कागमोल्लेखस् त्वनद्यतन-वाङ्मये
निबद्धे देववाण्यां तु, प्रथमं **तर्कताण्डवे**[१५]
द्वितीयं गुणरत्नस्य **दीपिकायां** तथैव च
**तर्करहस्य**-नाम्ना वै विख्यातायां महीतले।[१६] ॥२६-२७॥

'गोस्वामिनामैकदिव्यपुरुषप्रभवं' जगत्–
एतच्छाखानुसारेण विचित्रा सृष्टिकल्पना। ॥२८॥

तुरुष्कोऽत्र तु केषाञ्चिन् मते ख्रीष्टीय एव च,
न तु मौहम्मदः कश्चित् तुरुष्कत्वेन चर्चितः।[१७] ॥२९॥

**मञ्जुश्रीमूलकल्पे** तु तुरुष्काः चर्चिताः स्फुटम्।[१८]
दासार्थकः 'तरुक्षस्'[१९] तत्पदस्याभाति पूर्वजः। ॥३०॥

**अल्लोपनिषदप्यत्र** संस्कृतार्व्यसमन्विता
अक्बरीये युगे प्रोक्ता तथैवात्र विचिन्त्यताम्। ॥३१॥

एकोऽनुमीयमानोऽन्यो वेदोऽस्ति श्रूयमाणकः।
श्रुतिस् तु श्रूयमाणोऽनुमीयमानः स्मृतिस् तथा।[२०] ॥३२॥

'शृणु मोहिनि! मद्वाक्यं वेदेऽयं बहुधा स्थितः—
'यज्ञकर्मक्रियावेदः स्मृतिर् वेदो गृहाश्रमे।'[२१] ॥३३॥

आसुरो वेद इत्याख्यो वेदो वेदत्वतः स्मृतः ।[२२]
आसुरोपनिषच् चाभूत् कदाचिद् भारते पुरा ।[२३] ।।३४।।

'मन्त्रब्राह्मणयोर् वेदनामधेयम्' इति क्वचित् ।[२४]
वेदशब्दाभिधेयश् च मन्त्र एवेति केचन ।[२५] ।।३५।।

वेदत्वेन प्रसिद्धा याश् चतस्रो वेदसंहिताः
वेदसञ्ज्ञाभिमानिन्यो दयानन्दमते तु ताः । ।।३६।।

विध्यर्थवादमन्त्रात्मा वेदः कुल्लूक-दर्शने ।[२६]
नामधेयात्मकोऽपीति मेधातिथि-कुमारिलौ ।[२७] ।।३७।।

विध्यर्थवादयोर् भिन्नं ब्राह्मणं सायणेन च
उपनिषन् मता तेन विधिरज्ञातज्ञापकः ।[२८] ।।३८।।

सर्वोपनिषदः किन्तु अर्थवादात्मिका मताः
मीमांसादर्शने प्रायो जैमिनीये विशेषतः ।[२९] ।।३९।।

'विधिर्, विधेयस्, तर्कश् च वेद' इत्यभिधीयते
अपि कात्यायन-श्रौते[३०] गृह्ये पारस्करस्य च ।[३१] ।।४०।।

विधिर् ब्राह्ममेवात्र, विधेयो मन्त्र उच्यते,
तर्कः कः ? कल्पसूत्रं स्याद् भर्तृयज्ञ-मतेन च । ।।४१।।

किं तु **कल्पतरु-ग्रन्थे** मीमांसा तर्क-संज्ञका ।
विश्वनाथमते न्याय-मीमांसे तर्क इत्यहो ! ।।४२।।

षडङ्गान्यपि वेदस्य वेद एके वदन्त्यपि–[३२]
'ऋचो, यजूंषि, समानि, ब्रह्मणोऽङ्गानि च श्रुतिः ।'[३३] ।।४३।।

इतिहासपुराणानि वेदसञ्ज्ञां भजन्ति च
इत्याह जीवगोस्वामी **तत्त्वसन्दर्भ**-पुस्तके ।[३४] ।।४४।।

तान्युच्यन्ते च **छान्दोग्ये** पञ्चमो वेद इत्यपि ।[३५]
इतिहास-पुराणादि-वेदाः, सर्पासुरादयः,
वेदाः, पिशाच-वेदश् च ब्राह्मणादिषु कीर्तिताः ।[३६]
अहिर्बुध्न्य-[illegible][३७] [illegible] ते प्रकीर्तिताः । ।।४५-४६।।

ब्रह्मर्षिदैवराते च त्रिंशद्वर्षाणि प्रागपि
प्रादुर्भूता नवा मन्त्रास्, तद्गुरुणा प्रकाशिताः ।[३८] ॥४७॥

'प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते'
इति वायुपुराणोक्तिः श्रुतितत्त्वविवेचिनी ।[३९] ॥४८॥

वेदेष्वनित्यतापत्तिभियैतिह्यं निरस्यते
जैमिनिना दयानन्दस्वामिनाऽन्यैश् च कैरपि । ॥४९॥

नैरुक्ता, याज्ञिकाः केचित्, केचिच् चाप्यैतिहासिकाः
पुरा वेदार्थकाराणां सम्प्रदाया इमे त्रयः । ॥५०॥

सर्वतो न निरस्यन्ति नैरुक्ता याज्ञिका अपि
क्वचित् क्वचित् क्षमन्तेऽमीतिहासं वेदवाङ्मये । ॥५१॥

यास्को निरुक्तकारस् तु प्रोक्तवानसकृत् स्फुटम्
यत्र 'तत्रेतिहासं' ह्य'ाचक्षते'–स्वीकरोत्यसौ ।[४०] ॥५२॥

देवापेश् चार्ष्टिषेणस्य, तथा कौरव्य-शन्तनोः
ऐतिह्यं वर्षकामाख्य-सूक्ते[४१] स पश्यति स्फुटम् ।[४२] ॥५३॥

'प्रियमेधवदत्रिवज्, जातवेदो विरूपवत्,
'अङ्गिरस्वन् महिव्रत ! प्रस्कण्वस्य श्रुधी हवम् ।'[४३]– ॥५४॥

इत्यृचि तेन 'प्रस्कण्वः कण्वस्य पुत्र'[४४] ईक्ष्यते ।
ऋच्युद्धरिष्यमाणायां त्रितस्यैतिह्यमीदृशम्– ॥५५॥

'सं मां तपन्त्यभितः सपत्नीरिव पर्शवः
'मूषो न शिश्ना व्यदन्ति माऽऽध्यः स्तोतारं ते शतक्रतो!
'वित्तं मे अस्य रोदसी ।'[४५] ॥५६॥

सूक्तं प्रतिबभावेतत् कूपे त्ववहितं त्रितम्—
उदाहरति चैतिह्यं यास्कोऽत्रैवं निरुक्तकृत् ।[४६] ॥५७॥

तद् 'ब्रह्मेतिहासमिश्रं गाथामिश्रं च'[४७] गम्यते,
व्यवस्थापितमित्येवं निरुक्ते यास्कसूरिणा । ॥५८॥

ब्राह्मणान्यपि वेदेषु चेतिहासं प्रचक्षते
व्याख्यानावसरे वेदमन्त्राणां, तावदीक्ष्यताम्– ॥५९॥

'राज्ञो विश्वजनीनस्य यो देवो मर्त्यां अति
'वैश्वानरस्य सुष्टुतमा सुनोता परिक्षितः।'[४८] ॥६०॥

'संवत्सरो वै परिक्षिदग्निर् वै परिक्षित्' उ,
'गाथा एवैताः कारव्या राज्ञः परिक्षित इति।'[४९] ॥६१॥

जैमिनिः पूर्वमीमांसाकृच् चैतिह्यं निरस्यति,
ब्राह्मणेष्वपि सर्वेषु, मन्त्रेष्वेव न केवलम्। ॥६२॥

'अनित्यदर्शनाच् च'[५०] इति पूर्वपक्षस्य तूत्तरम्
'परन्तु श्रुतिसामान्यमात्रम्'[५१] इत्याह जैमिनिः ॥६३॥

बबरादिसमाख्यानां यौगिकार्थत्वदर्शनम्
अत्र, तद् बबरः शब्दानुकृतिर् वायु-सञ्ज्ञकः।[५२] ॥६४॥

यः प्रवाहयति त्योऽपि प्रवाहणिरुदीरितः,
व्युत्पत्त्या चानया सिद्धः खश् च वायुः प्रवाहणिः।[५३] ॥६५॥

इकारस् तु यथाऽपत्ये क्रियया अपि कर्तरि
तथा,[५४] ऽतो यौगिकाः शब्दा वैदिका, न नृसञ्ज्ञकाः ॥६६॥

यो 'न त्वेव न निर्ब्रूयाद्,'[५५] इति यास्कस्य निर्णयः
'नामान्याख्यातजानीति शाकटायन'[५६] इत्यपि। ॥६७॥

वेदपदानि सर्वाणि यौगिकानीति तेन तु
'न सर्वाणीति गार्ग्यो वैयाकरणानां'[५७] च केऽपि च ॥६८॥

'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि'[५८] इति ह
**महाभाष्य**मतं ज्ञेयम्, उणादिप्रक्रियां शृणु– ॥६९॥

'संज्ञासु धातुरूपाणि प्रत्ययाश् च ततः परे
'कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु।' ॥७०॥

'उणादि से जो प्रत्यय लिये,"डियाँ,""डुलुक,""डोलना,"
""मा"धातु से सिद्ध क्रिया"मियाँ,""मुलुक,""मोलना" ।' ॥७१॥

शब्दशास्त्रं च पाश्चात्यं धातुजनामवाद्यहो !
न त्वाख्यातात्मकाः सर्वे धातवो-ऽस्य विशिष्टता । ॥७२॥

विप्रतिपत्तयो बह्व्यो दृश्यन्ते हिन्दु-दर्शने
शब्दादि-वेद-नित्यत्वानित्यत्वविषये पुनः । ॥७३॥

'सिद्धे शब्दार्थसम्बन्धे'[५९] इति नित्यत्ववादिनः
'औत्पत्तिकस् तु शब्दस्यार्थेन सम्बन्ध'[६०] इत्यपि । ॥७४॥

वर्णशब्दानुपूर्व्यौ च नित्ये मीमांसका जगुः
पदपाठानुपूर्व्यौ चानित्य आह पतञ्जलिः ।[६१] ।७५॥

ब्रह्मणो वेदयोनित्वं[६२] वेदनित्यत्वमप्युत[६३]
सूत्रितं **ब्रह्मसूत्रेण,** व्यवस्था तस्य चेदृशी– ॥७६॥

वेदस्यापौरुषेयत्वं मीमांसावत् ततो धृतम्
ब्रह्मनिश्वासवद् वेदो स्वतो लोके प्रकाशितः ।[६४] ॥७७॥

वर्णाः, शब्दास्, तथा वेदा अनित्या **सांख्यसूत्रतः,**[६५]
वेदस्यापौरुषेयत्वं तथापि स्थाप्यते ततः ।[६६] ॥७८॥

'नित्यः शब्दार्थसम्बन्धो'[६७] **योगभाष्ये** प्रकीर्तितः,
पौरुषेयस् तथा वेदः स्फुटं योगेऽवधार्यते ।[६८] ॥७९॥

वेदस्यर्षिप्रणीतत्वं वैशेपिकमतं दृढम् ।[६९]
दृष्टिर् वैशेषिकी चेशनिरपेक्षेति विश्रुता । ॥८०॥

न्यायसूत्रकृता शब्दानित्यतावाद इष्यते ।
वेदस्य पौरुषेयत्वं चेशकार्यत्वमूलकम् ।[७०] ॥८१॥

वेदोत्पत्तिकथा प्राप्या वेदेषु ब्राह्मणेष्वपि ।
वेदो नित्यम् तथोत्पन्नोऽतया विज्ञायते ऋचा– ॥८२॥

'तस्माद् यज्ञात् सर्वहुतः ऋचः, सामानि जज्ञिरे,
'छन्दांसि जज्ञिरे तस्माद्, यजुस् तस्मादजायत ।'[७१] ॥८३॥

'यस्माद् ऋचो अपातक्षन्, यजुर् यस्मादपाकषन्,
'सामानि यस्य लोमानि, अथर्वाङ्गिरसो मुखम् ।
'स्कम्भं तं ब्रूहि कतमः स्विदेव सः ।'[७२] ॥८४॥

'ऋचः, सामानि, च्छन्दांसि, पुराणं, यजुषा सह
'उच्छिष्टाज् जज्ञिरे सर्वे दिवि देवा दिविश्रितः ।'[७३] ॥८५॥

वेदोत्पत्तिकथा दिव्योदाहृता वेदवाङ्मये
इतिहासपुराणादिव्याप्तेर् लाक्षणिकी मता । ॥८६॥

अपौरुषेयतावादपरस् तर्कः समीक्ष्यताम् ।
प्रयाति हास्यतां लोके इदानीं घोष्यते स चेत्– ॥८७॥

'पौरुषेयं न वा वेदवाक्यं स्यात्, पौरुषेयता
'काठकादिसमाख्यानाद् वाक्यत्वाच् चान्यवाक्यवत् । ॥८८॥

'समाख्याऽध्यापकत्वेन वाक्यत्वं तु पराहतम्
'तत्कर्त्रनुपलम्भेन; स्यात् ततोऽपौरुषेयता' ।[७४] ॥८९॥

अस्मर्यमाणकर्तृत्वान् नित्यशब्दमयत्वतः[७५]
याऽपौरुषेयता साध्या सा बालेयैव केवलम् । ॥९०॥

ऋग्यजुःसामवेदाश् च वह्नेर्, वायोश् च, भास्करात्
अभूवन् प्रादुरित्याहुर् ब्राह्मणान्यनुपूर्वशः ।[७६] ॥९१॥

'अग्नि-वायु-रविभ्यस् तु त्रयं ब्रह्म सनातनम्
'दुदोह यज्ञसिद्ध्यर्थं ऋग्यजुःसामलक्षणम् ।'[७७] ॥९२॥

"त्रीणि ज्योतींषि"[७८] तानुक्तानग्निवायुरवीन् स्फुटम्
सायणश्[७९] च दयानन्दो[८०] मन्येते जीवधारिणः । ॥९३॥

वस्तुतः खण्डशो वेदाः कृताः, दृष्टाः, प्रकाशिताः

ऋषिभिर् बहुसंख्यातैः सूक्ते सूक्ते निदर्शिताः । ॥९४॥

गोपथब्राह्मणेऽथर्वाख्यर्षयोऽथर्वसञ्ज्ञकम्
अपश्यन् नन्तिमं वेदमिति नूनं प्रकीर्त्यते ।[८१] ॥९५॥
भोः ! 'साक्षात्कृतधर्माण ऋषयो,'[८२] 'दर्शनाद् ऋषिः'[८३]
इति यास्को, मते यस्य त्वृषिशैल्यात्मिका श्रुतिः ।[८४] ॥९६॥

कात्यायनमताद् 'यस्य वाक्यं स ऋषिर्उच्यते ।[८५]
वाङ्मये तैत्तिरीये चर्षयो मन्त्रकृतः स्मृताः– ॥९७॥

'यामृषयो मन्त्रकृतो मनीषिणो अन्वैच्छन् देवास् तपसा श्रमेण
'तां देवीं वाचं हविषा यजामहे,सा नो दधातु सुकृतस्य लोके ।'[८६]
॥९८॥

'नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो
मन्त्रकृतो मन्त्रपतयः परादुः । माऽहमृषीन् मन्त्रकृतो मन्त्र-
पतीन् परादाम् ।'[८७] ॥९९॥

भोः ! 'सुकर्म-पाप-मन्त्र-पुण्येषु कृञा'[८८] उच्यते ।
भाष्यकारमते प्रायो मन्त्रद्रष्टैव मन्त्रकृत् ।[८९] ॥१००॥

पुरा पश्यति-धातुस् तु करणर्थोऽपि भाव्यते ।
महाभाष्यकृताऽऽचार्यः पश्यतीति प्रकीर्त्यते ।[९०] ॥१०१॥

ऋषीणां च कृतिर् वेदो वेद एवावधार्यते
तक्ष-जन्-कृ-सृजादीनां धातूनां सम्प्रयोगतः ।
'ऋषे ! मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन् गिरः
'सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिन्द्रायेन्दो !
परि स्रव ।'[९१] ॥१०२॥

'मिमीह श्लोकमास्ये पर्जन्य इव ततनः
'गाय गायत्र्यमुक्थ्यम् ।'[९२] ॥१०३॥

'अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय
'गिरश् च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं
मेधिराय ।'[९३] ॥१०४॥

'त्रिबन्धुरेण त्रिवृता सुपेशसा रथेन यातमश्विना
'कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ।'[९४] ॥१०५॥

वेदे पूर्वापरर्षीणां विभागोऽपि विभाव्यते ।
द्रष्टृत्वं नूतनमन्त्राणां नूतनर्षित्वमित्यहो ! ॥१०६॥
'अग्निः पूर्वेभिर् ऋषिभिरीड्यो नूतनैरुत ।
'स देवाँ एह वक्षति ।'[९५] ॥१०७॥
'यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
'इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ।'[९६] ॥१०८॥
कालक्रमेण सञ्जाता वेदा लोकोत्तरा, यथा—
'यस्मिन् वेदा निहिता विश्वरूपास् तेनौदनेनाति
तराणि मृत्युम् ।'[९७] ॥१०९॥

## टिप्पण्यः

१. मनु. २.१०

२. तत्रैव

३. मीमांसासूत्रम् सभाष्यवार्तिकम् १.३.१—२

४. 'अत एव च हारीतः—अथातो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः। श्रुतिश् च द्विविधा—वैदिकी तान्त्रिकी च।' कुल्लूकभट्टः, **मन्वर्थ-मुक्तावली** २.१

५. विष्णु-पुराणम् ३.३.४

६. महाभाष्यम्, पस्पशाह्निकम्; मुक्तिकोपनिषद् १.१२.१३; महाभारतम्. शान्तिपर्व ३४२.९७; अहिर्बुध्न्यसंहिता १२.८.९

७. मुक्तिकोपनिषद् १.१२.१४

८. अष्टाध्यायी ४.२.६२

९. 'निषत्सूपनिषत्सु च,' महाभारतम्, शान्तिपर्व ४७.२६

१०. '।'

११. विष्णुपुराणम् ३.४.२५

१२. दृश्यतामत्र टि० ३७ अधः

१३. **तत्त्वसङ्ग्रहः** ३५११-३५१६ अत्र कमनशीलप् तत्त्वसङ्ग्रह-पञ्जिकायाम्—'निमित्तं नाम शाखान्तरमस्ति, तत्र स्फुटतरमयमेव भगवान् शाक्यमुनिः सर्वज्ञः पठ्यते। तत् किमिति मूढैर् वेदं प्रमाणयद्भिरपि भवद्भिरसौ प्रतिक्षिप्यते ? ·· विघुष्ट-शब्द इति सकलजगत्-प्रख्यातकीर्तिः ।' (पृ० ६०६) तुलनीयम्—'प्रत्युत निमित्तनाम्नि शाखान्तरे स्फुटतरमेव सर्वज्ञः प्रतिपादितः ।' रत्नकीर्तिः, **सर्वज्ञसिद्धिः**, **रत्नकीर्तिनिबन्धावली**, (पृ० २५)

१४. 'यजुर्वेदस्य···तुरुष्क शाखा' (**प्रपञ्चहृदयम्**, पृ० १६)

१५. 'तुरुष्कागमादौ व्यभिचाराच् च ।' **तर्कताण्डवम्**, प्रथमः परिच्छेदः, पृ० २५५

१६. 'अथवा लोकस्वरूपेऽप्यनेके वादिनोऽनेकधा विप्रवदन्ते । तद् यथा—केचिन् नारीश्वरजं जगत् निगदन्ति; परे, सोमाग्निसम्भवम्·····; तुरुष्का, गोस्वामिनामैकदिव्यपुरुषप्रभवम् ।' (**तर्करहस्यदीपिका**, पृ० २०)

१७. 'Guṇaratna seems to refer to the Christians and the passage suggests Christ rather than Allah or Muhammad.' A.L. Basham, *History and Doctrine of the Ājīvikas* (London: Luaze & Co., 1951), पृ० ८२, पादटि० १

१८. **मञ्जुश्रीमूलकल्पः**

१९. **ऋ** ८.४६.३२

२०. 'द्विविधो वेदः—श्रूयमाणोऽनुमीयमानश् च। श्रूयमाणश् च श्रुतिरित्युच्यते, अनुमीयमानश् च स्मृतिरिति । द्वावपि चैतावनादी ।' **न्यायमञ्जरी**, प्रमाण-प्रकरणम्, पृ. २४०

२१. नारदीयपुराणम् २.२४.१५

२२. गोपथ० १.१.१०

२३. **छान्दोग्योपनिषद्** ८.८.५

२४. आपस्तम्बपरिभाषासूत्रम् १.३३

२५. धूर्तस्वामी, उक्तसूत्रव्याख्यायाम्

२६. कुल्लूकभट्टः, **मन्वर्थमुक्तावली** २.६

२७. मेधातिथिः, मनु. २.६ व्याख्यायाम्; कुमारिलः, **तन्त्रवार्तिकम्** १.२.१

२८. **सायणः, ऋग्भाष्यभूमिकायाम्**

२९.

३०. कात्यायन-श्रौत्रसूत्रम्

३१. पारस्कर-गृह्यसूत्रम् २.६.५

३२. तत्रैव २.६.६.

३३. वायुपुराणम् १.५९.३१

३४. तत्त्वसन्दर्भः (अच्युत ग्रन्थमाला), पृ० २९

३५. छान्दोग्योपनिषद् ७.१.२.४

३६. शतपथ० १.३.४.३.६.-१४. गोपथ० १.१.१०; १.२.२१; १.५.१०; आश्वलायन-श्रौतसूत्रम् १०.७

३७. अहिर्बुध्न्यसंहिता १२.४; सायणः, ऋग्भाष्यभूमिकायाम्

३८. कांश्चिदभिनवान् वेदमन्त्रान् साम्प्रतं स्वर्गतः कश्चिद् ब्रह्मर्षिदैवरातोऽपश्यदिति तस्य गुरुरेव वासिष्ठगणपतिमुनिरात्मानं तन्मंत्राणामाविर्भावस्य प्रत्यक्षसाक्षिण मन्यमानः। ते मन्त्राश् छन्दोदर्शनमिति कृत्वा सङ्गृहीता वासिष्ठगणपतिमुनिप्रणीतेन वासिष्ठान्वयभाष्येण सार्द्धं मुम्बईस्थेन भारतीयविद्याभवनेन १९६८ ख्रीष्टाब्दे प्रकाशनं नीतश्च।

३९. वायुपुराणम् ५९.५६

४०. 'तत्रेतिहासमाचक्षते,' निरुक्तम २.३.१, इत्यादिः

४१. ऋ. १०९८

४२. निरुक्तम् २.३.१

४३. ऋ. १.४५.३

४४. निरुक्तम् ३.३५

४५. ऋ. १.१०५ ८

४६. 'त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ'। निरुक्तम् ४.१.६

४७. निरुक्तम् ४.१.६

४८. अथर्व. २० १२७.७

४९. गोपथब्राह्मणम् २.६.१२

५०. पूर्वमीमांसासूत्रम् १.१.२८

५१. तत्रैव १.१.३१

५२. 'बबर इति शब्दानुकृतिः ।' शबरः १.१.३१.

५३. 'प्रवाहणस्य पुरुषस्यासिद्धत्वान् न प्रवाहणस्यापत्यं प्रावाहणिः । प्र-शब्दः प्रकर्षे सिद्धः, वहतिश् च प्रापणे, न त्वस्य समुदायः क्वचित् सिद्धः ।… तस्माद् यः प्रवाहयति स प्रवाहणिः, बबर इति शब्दानुकृतिः । तेन यो नित्योऽर्थः तमेवैतौ शब्दौ वदिष्यतः—वायुमाकाशं वा ।' शबरः १.१.३१

५४. 'इकारस् तु यथैवापत्ये सिद्धस् तथा क्रियाया अपि कर्तरि ।' (तत्रैव)

५५. **निरुक्तम्** २.१ १

५६. तत्रैव १.४.१

५७. तत्रैव

५८. **महाभाष्यम्** ७.१२.२.५

५९. कात्यायन-वार्तिकम्

६०. पूर्वमीमांसासूत्रम् १.१.५, 'औत्पत्तिक इति नित्यं ब्रूमः' इति शबरः ।

६१. 'यद्यप्यार्थो नित्यः, या त्वसौ वर्णानुपूर्वी साऽनित्या । तद्भेदाच् चैतद् भवति—काठकं, कालापकं, मौदकं, पैप्पलादकमिति ।' (**महाभाष्यम्** ४.३.१०१.३) अत्र कैयटः—'महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयाद् वेदार्थं स्मृत्वा शब्दरचनां विदधीत्यर्थः ।' नागेशभट्टोऽपि—'मन्वन्तरभेदेनानुपूर्वी भिन्नैव, "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधतिते" [**वायुपुराणम्**] इत्युक्तेः इत्यन्ये ।'

६२. 'संहिताया एव नित्यत्वं, पदविच्छेदस्य तु पौरुषेयत्वम् ।' (**महाभाष्यम्** ३.१.१०९)

६२. 'शास्त्रयोनित्वात् ।' (ब्रह्मसूत्रम् १.१.३)

६३. अत एव च नित्यत्वम्' (तत्रैव १.३.२९)

६४. दृश्यतामत्र शारीरकभाष्यमुभयोः सूत्रयोः । अपिच—'अरे! अस्य महतो भूतस्यनिश्वसितमेतद् यद् ऋग्वेदो, यजुर्वेदः, सामवेदो ऽथर्वाङ्गिरस, इतिहासः, पुराणं, विद्या उपनिषदः, श्लोकाः सूत्राण्यनुव्याख्यानानि, व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि ।' **बृहदारण्यकोपनिषद्** २.४.१०

६५. 'प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः। न शब्दनित्यत्वं तत्कार्यताप्रतीतेः।' (**सांख्यसूत्रम्** ५.५७-५८): 'न नित्यत्वं वेदानां, कार्यत्वश्रुतेः।' (तत्रैव ४५): 'नापौरुषेयत्वान् नित्यत्वमङ्कुरादिवत्।' (तत्रैव ४८)

६६. तत्रैव ५.४८,४६,४७,५०,५१

६७. **योगभाष्यम्** १.२७

६८. तत्रैव १.२४-२५

६९. 'बुद्धिपूर्वा वाक्यकृतिर् वेदे। न चास्मद्बुद्धिभ्यो लिङ्गमृषेः।' (वै. सू. ६.१.१—२)

७०. 'मन्त्रायुर्वेदप्रामाण्यवच् च तत्प्रामाण्यम्, आप्तप्रामाण्यात्।' (**न्या. सू.** २.१.६९); 'मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्।' (**न्यायभाष्यम्**, तत्रैव); 'वर्णानामनित्यत्वादेव वेदस्यानित्यत्वम्।' (**गौतमसूत्रवृत्तिः** २.२.१३); 'अनित्यत्वे सति सम्प्रदायाविच्छेदान नित्यत्वोपचारः।' **न्यायवार्तिकम्** २.१.६९); 'ईश्वरप्रणीतो वेदः' (**न्यायकुसुमाञ्जलिः**); 'ध्वस्तं तावत् समस्तं भुवनमिति तदा वेदनाशोऽप्यवश्यम्।' (**न्या-मं-१**, पृ. २३०-२३१)

७१. **ऋ.** १०.९०.९

७२. अथर्व. १०.७.२०

७३. तत्रैव ११.७.२४

७४. **तन्त्रवार्तिकम्** १.१.२९—३२

७५. **मीमांसाभाष्यम्** १.१.५, पृ. १७८-१९४

७६. **शतपथ०** ११.४.२.१—३; **ऐतरेयब्राह्मणम्** ५.५.७; **गोपथ०** १.१.६

७७. **मनु०** १.२३

७८. **शतपथ०** ११.४.२.२—३; **ऐतरेय०** ५.५.७. **गोपथब्राह्मणे** (१.१.६) तु ते 'त्रीन् देवान्' इति प्रोक्ताः।

७९. 'जीवविशेषाः' (**ऋग्भाष्योपक्रमणिका**)

८०. 'मनुष्यदेहधारिणः' (**ऋग्वेदादिभाष्यभूमिका**)

८१. **गोपथ०** १.१.५

८२. 'साक्षात्कृतधर्माण ऋषयो बभूवुः ।' (निरुक्तम् १.६.४)

८३. 'ऋषिर् दर्शनात्'। (तत्रैव २.३.२)

८४. 'अभ्यासे भूयांसमर्थं मन्यन्ते—यथाऽहो दर्शनीय ! अहो दर्शनीय ! ! इति । तत् परुच्छेपस्य शीलम् । परुच्छेप ऋषिः ।' (निरुक्तम् १०.४.६)

८५. कात्यायन-सर्वानुक्रमणी २.४

८६. तैत्तिरीयब्राह्मणम् २.८.८ ५

८७. तैत्तिरीयारण्यकम् ४.१.१.

८८. अष्टाध्यायी ३.२.८९

८९. 'ऋषिरतीन्द्रियार्थद्रष्टा मन्त्रकृत् । करोति-धातुस् तत्र दर्शनार्थः ।' (सायणः, ऐतरेयब्राह्मणभाष्यम् ६.१; तैत्तिरीयारण्यकभाष्यम् ४.१ १; तैत्तिरीयब्राह्मणभाष्यम् २.८.८ ५)

९०. 'पश्यति त्वाचार्यः' (महाभाष्ये, शतशः)

९१ ऋ. ९.११४.२

९२. ऋ. १.३८.१४

९३. ऋ. १ ६१.४

९४. ऋ. १.४७ २. एवंप्रकारा बह्वोऽन्ये मन्त्राः स्थानाभावादत्रोपेक्षिताः ।

९५. ऋ. १.१.२

९६. ऋ. १०.१४.१५

९७. अथर्व. ४.३५.६

—०—

X

## श्रुतिप्रामाण्याप्रामाण्य-कारिकाः

स्फोटो,ऽर्थश्, च ध्वनिर्, वर्णाः शब्दाञ्ज्ञानोति शब्दिकाः ।
स्फोटः शब्दो, ध्वनिः शब्द-गुण, इत्यथ वा पुनः ॥१॥

स्फोटो व्यङ्ग्यो, ध्वनिस् तस्य व्यञ्जकश् चोपचर्यते;
अप्युपरञ्जको ज्ञेयो व्यञ्जकत्वेन स ध्वनिः ।'[1] ॥२॥

'ध्वनिः स्फोटश् च शब्दानां ध्वनिस् तु खलु लक्ष्यते ।
'अल्पो महांश् च केषाञ्चिदुभयं तत् स्वभावतः ।'[2] ॥३॥

साधवोऽसाधवः शब्दा, वैदिका नित्यसाधवः ।
असाधवस् त्वपभ्रंशाः,—शङ्कका किन्तु बाधते—
सन्ति चेद् वैदिकाः शब्दाः सर्वशो नित्यसाधवः,
न व्यवह्नियमाणास् ते कस्माल् लोकेऽन्यशब्दवत् ? ॥४॥

मच्छ्लोकयोः प्रकाशन्ते वैदिकानि पदान्यपि
त्याज्यान्यसाधुवत् तानि कस्माद् वेदप्रमाणकैः ?— ॥५॥

'गच्छन्ति ब्राह्मणासोऽद्य यज्ञयागादिधर्मणे ।
'[illegible] ॥६॥

'आ दिनान्युत्तरा गच्छान् द्वा व्रात्या यत्र भूभुजा
'कृणवन् नालयो यत्रानालि ज्योत्स्ना करत्यमाम् ।'[३] ॥७॥

निरपेक्षमसाधुत्वं कालसापेक्षमस्ति वा ?
कालबाधितसाधुत्वं वेदवाचः प्रतीयते । ॥८॥

अपि शिष्टगृहीताश् च केचिच् छब्दा असाधवः ।[४]
वाल्मीकि-व्यास-यास्काश् चासाधुशब्दप्रयोजकाः ।[५] ॥९॥

'सूत्र-वार्तिक-भाष्येषु दृश्यते चापशब्दनम् ।'[६]
यद् वा तद् वाऽस्त्यनित्याश् च सर्वे शब्दा असाधवः ।[७] ॥१०॥

**महाभाष्या**नुसारेण वर्णा नित्याः समन्ततः ।[८]
नित्याः स्फोटात्मकाः शब्दा वैदिका लौकिकास् तथा ।[९] ॥११॥

असाधुशब्दराशिश् चानित्य एवेति सम्मतिः ।
नित्योऽर्थो नित्यशब्दस्यानित्या वर्णानुपूर्व्यहो ![१०] ॥१२॥

भेदाद् वर्णानुपूर्व्या, नार्थतः, शाखाभिदा श्रुतेः ।
अपि प्रवाहनित्या वर्णानुपूर्वीति कैयटः ।[११] ॥१३॥

नित्या वर्णानुपूर्वी च तत्तत्कल्पे प्रवाहतः
इतीच्छति तु नागेशभट्ट उद्द्योतकृत् स्फुटम् ।[१२] ॥१४॥

तत्त्वं विहन्यते नैव यस्मिस् तन् नित्यमित्यपि ।[१३]
स्वरो वर्णानुपूर्वी च नित्य आम्नाय इत्यपि ।[१४] ॥१५॥

कृता वर्णानुपूर्वी तु तत्तत्कल्पे महर्षिभिः
कल्पसमाप्तिपर्यन्तं नियतोद्द्योतकृन्मते ।[१५] ॥१६॥

वर्णा वर्णानुपूर्वी च शब्दा वेदाः स्वरूपतः
नित्या इत्याह मीमांसा कल्पभेदापलापिनी ।[१६] ॥१७॥

भर्तृहरिमतेऽपि 'न स्तः सृष्टिप्रलयौ' तथा ।[१७]
सूत्रे भाष्ये च मीमांसा स्वतःप्रामाण्यवादिनी ।[१८] ॥१८॥

आम्नायस्य क्रियार्थत्वादर्थवादात्मका ननु
अक्रियार्थपदान्येव वेद इत्याह जैमिनिः ।[१९] ॥१९॥

विशुद्धवस्तुवादी नो वेदभागः प्रभाकरे ।[२०]
नेतिहासोऽत्र, वेदेषु न पदं व्यक्तिवाचकम् । ॥२०॥

श्रुतिसामान्यमात्राणि ववरादिपदानि च ।[२१]
नित्यः शब्दार्थसम्बन्धः शङ्करादिमतेऽपि च ।[२२] ॥२१॥

प्रवाहनित्यता सृष्टिप्रलयानामभीच्छता
वेदान्तेनोच्यते वेदो नित्य एव प्रवाहतः ।[२३] ॥२२॥

ब्रह्मणः सम्भवस् तस्याप्रयत्नेनैव लीलया
नरनिःश्वासवत् प्रोक्तः स्वभाष्ये शङ्करेण च ।[२४] ॥२३॥

स्वार्थे स्वतःप्रमाणं स्याद् वेदः सम्यग् रवेरिव
अदृष्टविषयत्वात् तत्प्रामाण्यस्य विशेषतः ।[२५] ॥२४॥

न प्रामाण्यमुपैत्येवं श्रुतिर् लोकानुवादिनी ।
श्रुत्या लोकोऽप्रमात्माऽपि स्वार्थसिद्ध्यै प्रयुज्यते ।[२६] ॥२५॥

‘प्रत्यक्षेणानुमित्या वा यस् तूपायो न बुध्यते
‘एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।[२७] ॥२६॥

न हि श्रुतिशतं शीतोऽप्रकाशोऽग्निरिति ब्रुवत्
प्रामाण्यं समुपैत्येषा न प्रत्यक्षाद् बलीयसी ।[२८] ॥२७॥

ब्रूयादेवाप्रकाशोऽग्निः शीतो वेति यदि श्रुतिः,
अर्थान्तरं विकल्प्यं स्यात् तच्छ्रुतेश् चेति शङ्करः ।[२९] ॥२८॥

मुख्यार्था चापि गौणार्था श्रुतिर् द्वेधा विकल्प्यते ।
या सृष्ट्याख्यायिकाद्यात्मा श्रुतिः, गौणार्थवाचका । ॥२९॥

‘शब्द एव प्रमाणं’ स्यात् सम्यग् वाल्लभदर्शने,
‘[illegible]लौकिक’ ज्ञानदायको वेदवाङ्मये ।[३०] ॥३०॥

वेदशब्दाभिधेयार्थः परमार्थोऽस्ति तन्मते
लक्ष्यव्यङ्ग्यार्थचिन्ताऽत्रानर्थका इति विद्यताम् । ॥३१॥

'ये धातुशब्दा यस्यार्थे उपदेशे प्रकीर्तितः
'तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित् ।'[31] ॥३२॥

ब्रह्मणः सर्वरूपत्वादनुष्णत्वाद् विभावसोः
'वह्निरनुष्ण' इत्यादि-श्रुतीनां च प्रमाणता ।[32] ॥३३॥

साङ्ख्यसूत्रे प्रतिक्षिप्तं नित्यत्वं शब्द-वेदयोः ।
न नित्यत्वं तु वेदानां तत्कार्यत्वश्रुतेरिति ।[33] ॥३४॥

श्रुतेर् न पौरुषेयत्वं तस्याः कर्तुरभावतः ।[34]
किन्तु 'नापौरुषेयत्वान् नित्यत्वमङ्कुरादिवत् ।'[35] ॥३५॥

सकाशाद् ब्रह्मणो वेदाः स्वयं प्रादुर्भवन्ति हि
सर्वेऽदृष्टवशादादौ नरनिःश्वासवन् ननु ।[36] ॥३६॥

निजशक्त्या त्वभिव्यक्तेर् वेदानां सर्वथाऽपि च
स्वतःप्रामाण्यमेवैषां प्रसिद्धं साङ्ख्यदर्शने ।[37] ॥३७॥

'नित्यः शब्दार्थसम्बन्धो' **योगभाष्ये** प्रकीर्तितः ।[38]
ईश्वर-वेद-सम्बन्धोऽनादिस् तस्यानुसारतः ।[39] ॥३८॥

किन्तु वेदप्रमाणत्वे तूष्णीम्भावो धृतः किल
योगभाष्यकृता सम्यगथ न्यायमतं श्रृणु- ॥३९॥

अनित्यौ वर्णशब्दावित्यतो वेदास् तथैव च ।[40]
तन्नित्यत्वोपचारः स्यात् सम्प्रदायात्रुटित्वतः ।[41] ॥४०॥

महाप्रलयकाले तु वेदनाशः प्रजायते ।[42]
वेद ईशप्रणीतोऽतः पौरुषेयोऽपि गम्यते । ॥४१॥

मन्त्रायुर्वेदप्रामाण्यवद् वेदस्य प्रमाणता ।
प्रमाणं परतो वेदश् चेति न्यायमतं दृढम् ।[43] ॥४२॥

बुद्धिपूर्वा कृतिर् वेदश् चेति वैशेषिकं मतम् ।[८४]
पौरुषेयस्य वेदस्य नरः कर्ता न चेश्वरः । ॥४३॥

ऋषयो वेदकर्तारोऽनीशे वैशेषिके मते ।[८५]
धर्मप्रवचनाद् वेदप्रामाण्यं, परतश् च तत् ।[८६] ॥४४॥

दयानन्द-मते नित्याश् चतस्रो वेदसंहिताः
प्रवाहतः परेशेण कल्पे कल्पे प्रकाशिताः ।[८७] ॥४५॥

स्वतःप्रमाणमेवैताः, वर्णोऽप्यासां न चान्यथा,
सर्वविद्याविधानत्वात् सर्वज्ञवचनात् तथा । ॥४६॥

दृष्टार्थे चाप्यदृष्टार्थे तत्प्रामाण्यं स्वतो ननु ।
दयानन्दोऽग्रगण्योऽतः स्वतःप्रामाण्यवादिषु । ॥४७॥

कृतबुद्धिरदृष्टेऽपि यस्मिन् सञ्जायते ननु
तत् पौरुषेयमित्याह साङ्ख्यसूत्रकृत् स्फुटम् ।[८८] ॥४८॥

नरोच्चरितमात्रेण न भवेत् पौरुषेयता ।
सा बुद्धिपूर्वकत्वेनेत्युक्तं विज्ञानभिक्षुणा ।[८९] ॥४९॥

वेदवाक्यक्रमो जन्यो नरबुद्ध्यैव सर्वशः
वाक्यक्रमत्वतः कालिदासवाक्यक्रमो यथा । ॥५०॥

इति वैशेषिकाः प्राहुः पौरुषेयत्ववादिनः ।[९०]
वेदान् नरप्रणीतांस् ते मन्यमाना अनीश्वराः । ॥५१॥

श्रुतिप्रमाणको धर्मो–हिन्दूनां प्रायिकी मतिः ।
असङ्ख्याः श्रुतयोस् तेषां श्रुत्यनेकान्तवादिनाम् । ॥५२॥

श्रुतिः समादृता प्रायो हिन्दुभिर् यद्यपीक्ष्यते,
तत् तु क्वचिज् जिह्वयैव क्वचिच् च ग्रामवृद्धवत् । ॥५३॥

नवीनदृष्टिसम्पन्नैर् युवभिर् नागरैर् यथा
ग्रामवृद्धाः समादर्या, न मान्या अन्धभक्तितः । ॥५४॥

वेदोऽपि लोकवत् सर्वोऽनपेक्ष्यो परमार्थिभिः
इति स्मृतेर् विधानं स्याद् हिन्दूनामेव साहसम् । ॥५५॥

'त्यक्त्वा लोकांश् च विषयाणीन्द्रियाणि च
'आत्मन्येव स्थितो यस् तु प्राप्नोति परमं पदम् ।'[५१] ॥५६॥

'यावानर्थ उदपाने सर्वतः सम्प्लुतोदके
'तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।'[५२] ॥५७॥

क्वचित् क्वचित् तु वेदस्य विगानमपि दृश्यते
स्फुटमास्तिकशास्त्रेषु सर्वमान्येषु सर्वशः । ॥५८॥

परा विद्याऽऽत्मविज्ञानं शास्त्रातीतं प्रकीर्तितम् ।
श्रुतिः सर्वाऽपरा ज्ञेया विभागे विद्ययोर् द्वयोः ।[५३] ॥५९॥

मन्त्रविच् चात्मवित्तोऽस्ति लघीयानिति घोषणा
छान्दोग्योपनिषद्यस्ति,[५४] वेदनिन्दापरैव सा । ॥६०॥

## टिप्पणयः

१. **प्रदीपः** १.१.७०

२. **महाभाष्यम्** १.१.७०

३. स्वोपज्ञ-श्लोकौ उदाहरणार्थौ

४. **शब्दकौस्तुभः** १.१.२७; १.४.७; **काशिका** ४.१.१५१; **पदमञ्जरी** १.४.७; युधिष्ठिर-मीमांसकः, **संस्कृत व्याकरण शास्त्र का इतिहास**, २०३० वि०, I, पृ० ४२, टि० ३

५. **शब्दकौस्तुभः** १.४.७; मीमांसक, **सं० व्या० का इति०**, प्रथम अध्याय; मीमांसक, **मीमांसाभाष्य**, I, पृ० २६६

६. **तन्त्रवार्तिकम्**, १.३.२४, पृ० १६२

७. 'अपभ्रंशशब्दा न नित्याः ।' शबरः १.३.२६

८. 'नित्याश् च शब्दाः । नित्येषु च शब्देषु कूटस्थैरविचालिभिर् वर्णैर् भवितव्यमनपायोपजनविकारिभिः । यदि चायं "द" इत्यत्र दृष्टः "ण्डः"

इत्यत्र दृश्येत, नायं कूटस्थः स्यात्।' (महाभाष्यम्, शिवसूत्रम् १, पृ० ६६)

९. 'सिद्धे शब्दार्थसम्बन्धे' (तत्रैव, पस्पशाह्निकम्, पृ० ४७)

१०. 'यद्यप्यर्थो नित्यो, या त्वसौ वर्णानुपूर्वी साऽनित्या। तद् भेदाच् चैतद् भवति—काठकं, कालापकं, मौदकं, पैप्पलादकमिति।' (तत्रैव ४.३.१०१, II, पृ० ४६०)

११. 'या त्वसाविति महाप्रलयादिषु वर्णानुपूर्वी-विनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयाद् वेदार्थं स्मृत्वा शब्दरचनां विदधतीत्यर्थः। ... ततश् च कठादयो वेदानुपूर्व्या कर्तार एव, न तु स्थिताया एव [वेदानुपूर्व्याः] सुशर्मादिवत् प्रवक्तारः।' (प्रदीपः, तत्रैव)

१२. 'वर्णानुपूर्वी ... नियतेति। तत्तत्कल्पे यादृशी ऋषिभिः कृता सा तत्कल्पसमाप्तिपर्यन्तं नियतेत्यर्थः।' (उद्द्योतः, तत्रैव)

१३. महाभाष्यम्, पस्पशाह्निकम्, पृ० ५०

१४. 'स्वरो नियत आम्नाये अस्यवाम-शब्दस्य। ...वर्णानुपूर्वी खल्वप्याम्नाये नियता अस्यवाम-शब्दस्य।' (महाभाष्यम् ५.२.५९ ४, II, पृ० ५७४)

१५. 'वर्णानुपूर्वी ... नियतेति। तत्तत्कल्पे यादृशी ऋषिभिः कृता सा तत्कल्पसमाप्तिपर्यन्तं नियतेत्यर्थः।' (उद्द्योतः, पस्पशाह्निकम्, पृ० ५०)

१६. 'औत्पत्तिकस् तु शब्दस्यार्थेन सम्बन्धः।' मी० सू० १.१.५; 'औत्पत्तिकः इति नित्यं ब्रूमः, उत्पत्तिर् हि भाव उच्यते लक्षणया।' शबरः, तत्रैव; मीमांसासूत्रं सभाष्यम्, तर्कपादः, अधि० ६-७

१७. भर्तृहरिः, महाभाष्यदीपिका, पृ० २२

१८. भर्तृहरिः, महाभाष्यदीपिका, पृ० २२

१९. 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'। मीमांसा-सूत्रम् १.२.१

२०. तदेव; 'श्रुतीनां सिद्धवस्तुबोधकाभावात्।' प्रकरणपञ्चिका, पृ० ३३५ 'प्रवृत्ति-निवृत्ति-विधि-तच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति।' शारीरकभाष्यम् १.१.४, पृ० ८६, प्राभाकरमतान्वाख्याने

२१. 'परं तु श्रुतिसामान्यमात्रम् ।' मीमांसा-सूत्रम् १.१.३१

२२. शारीरकभाष्यम् १.३.२८ (नित्यः शब्दार्थ-सम्बन्धः)

२३. 'सृष्टिप्रलयानङ्गीकर्तृ-पूर्वमीमांसक-रीत्या वेदाः स्वरूपतो नित्याः, उत्तरमीमांसक-रीत्या प्रतिकल्पं सृष्टिमारभ्य प्रलयपर्यन्तस्थायित्वेन प्रवाहनित्या एव ।' वेदान्तपरिभाषा, पृ० ४६६

२४. वेदस्य सम्भवो ब्रह्मणः 'अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवत् ।' शारीरकभाष्यम् १.१.३

२५. 'वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यम्, रवेरिव रूपविषये ।' शा० भा० २.१.१; तत्प्रामाण्यस्य अदृष्टविषयत्वात् । प्रत्यक्षादिप्रमाणानुपलब्धे हि विषये···श्रुतेः प्रामाण्यम्, न प्रत्यक्षादिविषये अदृष्टदर्शनार्थत्वात् प्रामाण्यस्य । गीता-भाष्यम् १८.६६

२६. 'यद्यपि श्रुतिः प्रमाणं स्वविषये भवति, तथापि प्रमाणान्तरेण विषयापहारेऽन्यपरा भवितुमर्हति, यथा मन्त्रार्थवादौ ।' शा० भा० २.१.१३

२७. सायणः, ऋग्भाष्योपक्रमणिका

२८. 'न चाहमिति सर्वजनीनस्फुटतरानुभवसमर्थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम् । अनुभवविरोधात् । न ह्यागमाः सहस्रमपि घटं पटयितुमीशते ।' भामती, पृ० ४

२९. 'न हि श्रुतिशतमपि शीतः अग्निः अप्रकाशो वा इति ब्रुवत् प्रामाण्यमुपैति । यदि ब्रूयात् शीतः अग्निः अप्रकाशो वा इति, तथापि अर्थान्तरं श्रुतेः विवक्षितं कल्प्यम् ।' गीताभाष्यम् १८-६६

३०. 'वेदा इति । शब्द एव प्रमाणं, तत्राप्यलौकिकज्ञापकमेव ।' तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम्, स्वोपज्ञा 'प्रकाश'–टीका ७

३१. वल्लभः, पत्रावलम्बनम् ४, पृ० ३

३२. 'ब्रह्मणः सर्वरूपत्वेनापि वह्नेरनुष्णत्वेनापि "वह्निरनुष्णः" इत्यादिवाक्यान्यपि प्रमाणानि ।' विट्ठलनाथः, विद्वन्मण्डनम्, पृ० ४३

३३. 'न शब्दनित्यत्वं, कार्यताप्रतीतेः। न नित्यत्वं वेदानां, कार्यत्वश्रुतेः।' **सां० सू० ५.५८, ४५**

३४. 'न पौरुषेयत्वं, तत्कर्तुः पुरुषस्याभावात्।' तत्रैव ५.४६

३५. 'नापौरुषेयत्वान् नित्यत्वं, अङ्कुरादिवत्। तत्रैव ४८

३६. 'वेदास् तु निःश्वासवददृष्टवशाद् बुद्धिपूर्वका एव स्वायम्भुवः सकाशात् स्वयं प्रादुर्भवन्ति, अतो न पौरुषेयाः।' तत्रैव ५.५०

३७. 'निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्।' तत्रैव ५.५१

३८. **योग-भाष्यम्** १.२७

३९. 'एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः सम्बन्धः।' तत्रैव १.२४

४०. 'वर्णानामनित्यत्वादेव वेदस्याप्यनित्यत्वम्।' **गौ० सू० वृ०** २.२.१३

४१. 'मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदाद् वेदानां नित्यत्वम्।' **न्यायवार्तिकम्** २.१.६९

४२. 'ध्वस्तं तावत् समस्तं भुवनमिति तदा वेदनाशोऽप्यवश्यम्। न्यायमञ्जरी, I, पृ० २३०-२३१

४३. मन्त्रायुर्वेदप्रामाण्यवच् च तत्प्रामाण्यम्, आप्तप्रामाण्यात्।' **न्या०सू०** ६९

४४. **वै० सू०** ६.१.१

४५. 'न चास्मद्बुद्धिभ्यो लिङ्गमृषेः।' तत्रैव ६.१.२; 'आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु…यत् प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते तदार्षमित्याचक्षते।' **पदार्थधर्मसङ्ग्रहः**, पृ० ६२१-६२२; 'आम्नायो वेदस्, तस्य विधातारः कर्तारोऽपि ये ऋषयः।' **न्यायकन्दली**, पृ० ६२८; 'आम्नायो वेदः श्रुतिस्मृतिलक्षणस्, तस्य विधातारः कर्तारस् तेषामृषीणां ··।' **व्योमवती**, पृ० ६२२



४६. 'तद्वचनादाम्नायस्य प्रामाण्यम्।' **वै० सू०** १.१.२

४७. दयानन्द-सरस्वती, **ऋग्वेदादिभाष्यभूमिका**

४८. 'यस्मिन् नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम् ।' सां० सू० ५.५०

४९. 'न पुरुषोच्चरितमात्रेण पौरुषेयत्वम्,…… किं तु बुद्धिपूर्वकत्वेन ।' विज्ञानभिक्षुः

५०. 'वेदवाक्यक्रमः पुरुषबुद्धिजन्यः वाक्यक्रमत्वात्, कालिदासादिवाक्यक्रमवत् ।' वैशेषिकसूत्र-मिथिलावृत्तिः ६.१.१

५१. लघुविष्णुस्मृतिः ४.३५

५२. गीता २.४६

५३. मुण्डकोपनिषद् १.१.४-५ तुलनीयम्—'The superior Science is more of the nature of wisdom than the ancillary......' Aristotle, Metaphysics

५४. 'सोऽहं भगवः ! मन्त्रविदेवास्मि, नात्मवित् ।' छान्दोग्यो, ७.१.३

—०—

XI

# प्रत्यक्षप्रमाणकारिकाः

× × ×

(नैकाऽपि कारिका परिच्छेदेऽस्मिन्नुपलभ्यते । केवलं ग्रन्थ-कर्तृविरचितया विषयानुक्रमणिकया ज्ञायते यत् 'प्रत्यक्षप्रमाण-कारिकाः' इति शीर्षक एकादशः परिच्छेद आसीत्तस्य सङ्कल्पितः ।

—०—



× × ×

## XII

# ख्यातिकारिकाः

प्रत्नसांख्ये प्रसिद्धार्थख्यातिः सर्वास्तिवादिनी ।
सदसत्ख्यातिरन्येषां साङ्ख्यानामिति गम्यताम् । ॥ १ ॥

सैवाख्यातिरपि ज्ञेया, ऽविवेकख्यातिरित्यपि ।
यो'ऽविवेको' भवेत् साङ्ख्ये सा'ऽविद्या' योग उच्यते । ॥ २ ॥

सोऽविवेकोऽर्थयोः साङ्ख्यानुसारेण समक्षयोः
विवेकाख्यातिवादे तु स स्मृतज्ञातयोः शृणु ॥ ३ ॥

इदं रजतमित्यत्र 'इदं' सत 'रजतं' त्वसत् ।
सदसत्ख्यातिवादोऽतोऽनिरुद्धेनानुमोदितः । ॥ ४ ॥

भवेत् स्मृतिप्रमोषात्मं विवेकाख्याति-नामधृक्
अख्यातिरपि ख्यातं प्राभाकरमतं त्विह । ॥ ५ ॥

योऽत्रबोधयति त्वर्थमर्थासंस्पृशतीति ह
इदं चित्तं विजानीयादतोऽख्यातिः प्रभाकरे । ॥ ६ ॥

इद रजतमित्यत्र 'इदं'-ज्ञानं तु चाक्षुषम्
'रजत'ावलम्बि यद् ज्ञानं स्मरणज्ञानमेव तत् । ॥ ७ ॥

भ्रमस् तयोर् विवेकस्य स्यादग्रहनिबन्धनः ।
विपर्ययभ्रमाध्यासा विवेकाग्रहणात्मकाः ॥ ८ ॥

रामानुजस्य सत्ख्यातिर् यथार्थख्यातिरेव वा,
सा तज्जातीयकैव स्याच् छ्रीभाष्ये विवृता, शृणु ॥ ९ ॥

'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्
'श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ।
'रूप्यादिसदृशश् चायं शुक्त्यादिरुपलभ्यते,
'अतस् तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ।
'कदाचिच् चक्षुरादेस् तु दोषाच्छुक्त्यंशवर्जितः
'रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ।
'दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते
'अतो यथार्थं रूप्यादिर्विज्ञानं शुक्तिकादिषु ।
'बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते
'शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ।' ॥६–१४॥
ख्यातिरलौकिकार्थाऽपि केचिन् मीमांसका जगुः
शुक्तौ यद् रजतं ख्यातं तदलौकिकवस्त्विति । ॥१५॥
स्वप्नेऽपि प्राणिनां पुण्यपापानामनुसारतः
सृज्यन्ते स्वप्नमात्रस्था अर्था भगवता स्वयम् । ॥१६॥
सांख्यरामानुजेष्टस्य ख्यातिवादस्य वै पुनः
प्रतियोग्यस्त्यसत्ख्यातिवादो माध्यमिकेरितः । ॥१७॥
न्यायवैशेषिकस्यापि, योगिनां, भाट्टजैनयोः
अन्यथाख्यातिरित्याहुर् मध्यमार्गावलम्बिनाम् । ॥१८॥
स्मृतिप्रमोषवादो वा, विवेकाख्यातिरेव वा
उताग्रहणवादो वा, विवेकाग्रहणं च वा
प्रभाकरमतं ज्ञेयं, चाख्यातिर् भूतवादिनाम् ।
ख्यातिरलौकिकी चैव मीमांसकैकदेशिनाम् ।
इति प्राभाकराणां स्यात् ख्यातिवादो महोदयः ।॥१६-२०॥
तथाऽनिर्वचनीया च ख्यातिरद्वैतवादिनाम् ।
योगाचारस्य च ख्यातिरात्मख्यातिस् समार्थका ।
चार्वाकाणां मतं प्रायोऽख्यातिवादात्मकं ननु ।
इति विद्यात् समासेन ख्यातिवादान् पृथग्विधान् ।॥२१-२२॥
(मतावादेकोपलभ्यते)



—o—

# XIII

## प्रमाणातीतकारिकाः

× × ×

(नैकाऽपि कारिकाऽत्रोपलभ्यते । केवलं ग्रन्थकर्तृविरचितया ग्रन्थानुक्रमणिकया ज्ञायते यत् 'प्रमाणातीतकारिकाः' इति शीर्षकः त्रयोदशः परिच्छेद आसीत्तस्येष्टः ।)

समाप्तोऽयं प्रमाणकारिका–ग्रन्थः



× × ×